KÂVYAMÂLÂ. 37.



# THE RASASADANA BHÂNA

OF

## YUVARÂJA.

EDITED BY

PANDIT S'IVADATTA

AND

KÂS'ÎNÂTH PÂNDURANG PARAB.



PRINTED AND PUBLISHED

BY

TUKARAM JAVAJI

PROPRIETOR OF "JAVAJI DADAJI'S NIRNAYA-SAGARA" PRESS.

BOMBAY.

1893.

*Price 7 annas.*

काव्यमाला ३७.

युवराजकविविरचितो

# रससदनभाणः ।

जयपुरमहाराजाश्रितमहामहोपाध्यायपण्डितदुर्गाप्रसाददारक-
केदारनाथकृपाङ्गीकृतशोधनकर्मणा शिवदत्तशर्मणा,
मुम्बापुरवासिपरबोपाह्वपाण्डुरङ्गात्मजकाशीनाथ-
शर्मणा च संशोधितः ।

स च
मुम्बय्यां निर्णयसागराख्ययन्त्रालये तदधिपतिना मुद्राक्षरैरङ्कयित्वा
प्राकाश्यं नीतः ।

१८९३



मूल्यं ७ आणकाः ।

# काव्यमाला।



## श्रीमद्युवराजकविविरचितो

## रससदनभाणः[2]।

प्रयते केरलदेशे प्रथितं राराष्टि कोटिलिङ्गपुरम्।
श्रीमान्युवराजाख्यस्तत्रास्ते दीर्घदर्शिमुकुटमणिः॥ १॥
कालीकृपाकटाक्षक्षपिताखिलकल्मषौघधिषणोऽयम्।
रससदननामधेयं सुधियां प्रीत्यै करोति भाणमिमम्॥ २॥

ब्रह्मेन्द्रादित्रिदशमुकुटीपद्मरागप्रकाश-
प्रातःसंध्यासमधिगमनस्मेरपादाम्बुजश्रीः।
श्रद्धापूर्वप्रणतजनवाकामसंतानवल्ली
नित्यानन्दं दिशतु भवतां नन्दिनी चन्द्रमौलेः॥ ३॥

---

१. अयं श्रीमान्युवराजकविः स्वकीयं देशं केरलं, नगरं कोटिलिङ्गपुरं च स्वयमेव वर्णयति. कुलकालौ तु न ज्ञायेते. एतत्समाप्तौ सुधानन्दलहरीस्तोत्रसमाप्तौ च 'शास्त्रेषु शाततमशस्त्रसमापि बुद्धिः काव्येषु नव्यनलिनाधिकसौकुमारी। यस्यास्य तामरसलास्यरसा च वाणी हर्षं न कस्य कुरुते युवराज एषः॥' इत्युपलभ्यते. सुधानन्दलहरीसमाप्तौ तु 'व्याकृत्यादिसमस्तशास्त्रसमुदायाम्भोधिकुम्भीसुतः काव्यालंकृतिनाटकोद्धसुकृतौ काव्यस्य सत्यं समः। पुण्यः पण्डितराजराजिगजताकुम्भाद्रिसंभेदने दम्भोलिर्युवराजकोविदमणिर्वर्वर्ति सर्वोपरि॥ अपि पुरुकृतरीढं पण्डितंमन्यमूढैर्मम तु सुकृतिरत्नं हन्त गृह्णन्ति सन्तः। अवगणितमवद्यैर्दर्दुरैरप्ययाप्याः किमनणकमृणालं राजहंसास्त्यजन्ति॥' इत्यधिकं समुपलभ्यते. एतत्कृता ग्रन्थस्त्वेते:—(१) त्रिपुरदहनचरितम्, (२) देवदेवेश्वराष्टकम्, (३) मुररिपुस्तोत्रम्, (४) रससदनभाणः, (५) रामचरितम्, (६) श्रीपादसप्तकम्, (७) सादाशिवी, (८) सुधानन्दलहरी, (९) हेत्वाभासोदाहरणश्लोकाः. २. अस्य च भाणस्य पुस्तकद्वयमस्माभिरासादितम्. तत्रैकं पण्डितवरश्रीयुतमुकुन्दशर्मात्मजज्येष्ठारामशर्मभिः ४७ पत्रात्मकम्, अपरं च काव्येतिहाससंग्रहसंपादकैः ४५ पत्रात्मकमस्मभ्यं काव्यमालार्थं प्रहितमिति तेषामतीवोपकारमूरीकुर्मः.

अपि च ।

नित्यं नश्चित्तपद्मे परिलसतु कपाली[1] कपालीकपाली-
मालाधारी[2] समस्तप्रमदजनकलापः[3] कलापः कलापः ।
भूत्वा निर्भाति यस्याधिकमसुसमरीणामरीणामरीणा-[4]
मुत्पेष्टा यश्च दूरीकृतकमलमहस्तोमहस्तो महस्तः[5] ॥ ४ ॥

अपि च ।

केका राजति जीवनाथ,[6] दयिते कालो ह्ययं वार्षिकः,
प्रश्नोऽयं[7] त्वयि, नन्विदं[8] प्रतिवचः सा भारती केवलम्, ।
जिह्वाग्रे तव सा कथं नु शिरसि,[9] ब्रह्मा[10] मया कल्पितः,
सर्वं त्वत्कृतमीश्वरेति शिवयोः संभाषणं पातु नः ॥ ५ ॥

अपि च ।

अङ्गानि[11] क्षेममङ्गीकृतपुरुषतया मोहने[12] मोहनाङ्ग्या
प्रक्रान्तानि क्रियासुर्जलनिधिजनुषा लुप्तकल्पान्तराणि
नाभीगम्भीरकूपोदरकुहरविशन्निःसरं्द्ब्रह्ममौलि-
प्रत्युप्तानेकरत्नाङ्कुरनिकरसमाकृष्टरोमावलीनि ॥ ६ ॥

(नान्द्यन्ते प्रविशति सूत्रधारः ।)

**सूत्रधारः—**

श्रीमूलस्थानमाहुः[13] सरसिरुहदृशामङ्गमत्यन्तगुप्तं,
व्यञ्जत्सोपानमासामपि मुखसहितं मण्डपं यस्य गुप्तम् ।

---

१. कायमान्मृत्योः पालयतीति मृत्युंजयः. २. कं वायुं पिबन्ति तेषां कपानां सर्पाणामालीं पङ्क्तिम्, कपालीनां शिरोभङ्गानां मालां च. धारयति तच्छीलः. ३. कलापश्चन्द्रो यस्य अधिकं शिरसि कलापो भूषणं भूत्वा निर्भाति. ४. असुसमैः प्राणतुल्यैः प्रियै रीणानां नियुक्तानाममरीणां सुराङ्गनानामरीणां शत्रूणां दैत्यानां यश्चोत्पेष्टा. ५. महस्तस्तेजसा दूरीकृतस्तिरस्कृतः कमलमहस्तोमो येनेदृग् हस्तो यस्य. ६. केका इत्यस्यैकपदत्वं मत्वा शिवस्य प्रतिवचः. ७. 'के का' इति भिन्नपदत्वेन प्रश्नत्वम्. ८. शिववाक्यमेतत्. ९. कशब्दस्य शिरोवाचित्वमङ्गीकुर्वत्याः शिवाया वाक्यम्. १०. शिवश्च कशब्दस्य ब्रह्मवाचित्वमङ्गी कृत्योत्तरयति. ११. अङ्गानि सुरतताडनानि. १२. मोहने मदनयुद्धे. १३. 'सरोजदृशामङ्गेषु स्मरदेवमूलस्थानादिवर्णनेन ता एव स्मरदेवप्रतिष्ठाभूताः' इति सूच्यते.

गुप्तागुप्तं च मध्येकृतसरणि पुरोमन्दिरं, वालिपीठं
गेहं चाशेषदृश्यं, दिशतु सुखमिदं दैवतं वः स्मराख्यम् ॥ ७ ॥

अपि च ।

ताम्बूलं बीजवापः सरभसपरिरम्भश्च केतुप्रतिष्ठा
सीत्कारः शङ्खनादो मणितविधिरपि व्यक्तवादित्रघोषः ।
रागोन्मेषाः प्रदीपा घनमघनहतिर्मुष्टिभिर्वत्सभागे
प्रादक्षिण्यप्रचारो वलिवितरणतश्चुम्बनं मस्तकादौ ॥ ८ ॥

केशाद्भ्रंशः सुमानां वलिविधिरधरास्वादनं मृष्टभुक्ति-
र्लोकैरालोकनार्थं सकुतुककृतमुद्ग्रीवणं रोमहर्षः ।
उद्यत्स्वेदाम्बुधाराप्लवनमवसितिस्नानमानन्दमूर्छा
प्रस्वापो यत्र सोऽव्यान्मदनसुरमहः प्रीयमाणेन्द्रियौघः ॥ ९ ॥

(किंचिदुपसृत्य ।) भो भोश्चतुःसमुद्रवलयप्रमुद्रितमहीमण्डलमहामण्डनायितश्रीकोटिलिङ्गविषयवास्तव्यायाः समस्तदैत्यकुलतमस्ततिनिरस्तीकरणपुरस्ताद्गिरिशिरःस्थचुकगभस्तीश्वरकरस्तोमभूतायाः समराङ्गणगगनस्थलसंचरणसमयचञ्चलीकृतकरकरवालचञ्चलारुचिसंचयादीपितदिगन्तरालकालकालिकायाः शतकोटिकबन्धकुलनिर्माणसंमोदितनिजपरिवारभूतकूलिकायाः श्रीभद्रकालिकायाः केलियात्रायां सकलहरिदन्तरेभ्यः समागताः सभासदः, शृणुतेमां मदीयां विज्ञापनाम्—

अत्रागता वयममी च तथा भवन्तः
सत्रा वधूभिरवलोकयितुं जनन्याः ।
यात्रामहं निशि कृतं तदिहादिनान्तं
पात्राण्यमी भवदुपासनलालसायाः ॥ १० ॥

यतः ।

नाट्ये वयं परिचिताश्चिरमाशिशुत्वा-
द्यूयं च नाट्यगुणदोषविवेकदक्षाः ।
एवं सति क्षणमपि प्रतिपद्य कालं
नोपास्महे यदि कथं निरवद्यविद्याः ॥ ११ ॥

तत्केन प्रबन्धेन प्रयोगपदवीमुपनीतेन भवदाराधनमाचरामः । कथयध्वेमभिलषितम् । (साञ्जलिबन्धम् ।) किं ब्रूथ—'अस्ति श्रुतमत्रत्ययुवराजेनास्या एव जनन्याः केलियात्रामहमधिकृत्य कृतं किमपि भाणम् । तदेवेदानीं प्रयोक्तुमुचितम् । यददूरवर्तिप्रत्यक्षानुभूतिविषयप्रमेयवस्तुनः प्रबन्धस्याभिनयः सुविज्ञानतन्मयत्वादिगुणतया महान्तमानन्दमुत्पादयति' इति। (स्मरणमभिनीय ।) अहो महान्प्रमादोऽस्माकम् । यत्परुदेव तत्रभवता युवराजेन 'असत्कृतं किमपि भाणं प्रयोगपदवीमवतारय' इत्यस्मत्करे समर्पितं 'तथैव' इत्याश्रुत्यास्माभिरामूलमवलोक्यावधारितं च । तत्सर्वमविचार्येदृशमिदानीं विज्ञापितम् । किं ब्रूथ—'महतां प्रमादे सत्यप्यप्रमाद इवानुकूलो विधिरभीष्टार्थसाधकः' इति । (सहर्षम् ।) हन्त, वयमनुगृहीता भवद्भिः, यन्महच्छब्दवाच्यकोटौ प्रवेश्यामहे ।

विनयादिगुणग्रामदर्शनप्रीतचेतसाम् ।
अनुग्रहेण साधूनां महत्त्वं याति मानवः ॥ १२ ॥

किं ब्रूथ—'भवतु । त्वरितमेवारभ्यताम् ।

सरसाभिनयावलोकने कृतकौतूहलमस्ति नो मनः ।
समयस्य विलङ्घनं ततः परिसोढुं नहि पारयामहे ॥ १३ ॥'

इति । (सरभसम् ।) तथा । (इति परिक्रम्य । नेपथ्याभिमुखमवलोक्य ।) प्रिये, इतस्तावत् ।

(प्रविश्य)

**नटी**—एसा पद्द ह्मि । अहिमदकरणिज्जे आणवेदु अज्जो । (क)

**सूत्रधारः**—आदिष्टोऽसि परुत्कृतयुवराजनियोगानुगुणमेव संप्रति सभासद्भिः सद्भिः । तदारभ्यतां वर्तमानं हेमन्तकालमधिकृत्य संगीतकम् ।

**नटी**—जं आणवेदि अज्जो । (इति गायति ।)

कुन्दलदामुउलट्ठिदमहुअरफुक्कारसान्दपवणेहिं ।
आहुणिआणि दिणाइ हिअए जणअन्दि म्महज्जलणम् ॥ १४ ॥

अवि अ ।

मयणविसिहधाराघट्टणोक्किण्णचुण्ण-
ब्भमअरहिमजाले एत्थ काले जुआणो ।

---

(क) एषा प्राप्तास्मि । अभिमतकरणीये आज्ञापयत्वार्यः ।

सिसिरपवणवाहां णासअन्ति प्पिआणं
कुचकलसहसन्दीसेवणादो अजस्सम् ॥ १५ ॥ (क)

**सूत्रधारः**—साधु गीतम् । साधु गीतम् । यतः ।

संगीतेन तवामुना मुखविधोः पीयूषधाराभ्रमं
कुर्वाणेन विपूर्णकर्णयुगलास्तद्भारखिन्ना इव ।
तिष्ठन्ति स्तिमिताः सुखोदयवशादालस्यमाबिभ्रत-
श्चित्रन्यस्तनरा इव क्षणममी सर्वेऽपि सामाजिकाः ॥ १६ ॥

वयमपि तदेकतानमानसा विषयान्तराणि स्पष्टं न विजानीमः ।

(नेपथ्ये ।)

विभाकरकराङ्कुरविभावितपुरोहरित् ।
विभावरी विभातेयं विभाति विरलोडुका ॥ १७ ॥

**सूत्रधारः**—प्रिये, कोऽयं कुतस्त्यः शब्द इव श्रूयते ।

**नटी**—अज्ज, मारिसो विहस्स भूमिअं घेत्तूण णेवत्थे जेव्व चिट्ठन् 'विभाअर–' त्ति पढइ । (ख)

**सूत्रधारः**—अहो वयं गीतरसानुभवव्यामुह्यमानमानसाः कालविलम्बमजानन्त एव स्थिताः । तत्त्वरितमेवानन्तरकरणीयाय सज्जीभवामः ।

(इति निष्क्रान्तौ ।)

**इति प्रस्तावना ।**

---

(क) यदाज्ञापयत्यार्यः ।

कुन्दलतामुकुलस्थितमधुकरफूत्कारसान्द्रपवनैः ।
आधुनिकानि दिनानि हृदये जनयन्ति मन्मथज्वलनम् ॥

अपि च ।

मदनविशिखधाराघट्टनोत्कीर्णचूर्ण
भ्रमकरहिमजाले अत्र काले युवानः ।
शिशिरपवनबाधां नाशयन्ति प्रियाणां
कुचकलशहसन्तीसेवनातोऽजस्रम् ॥

(ख) आर्य, मारिषो विटस्य भूमिकां गृहीत्वा नेपथ्य एव तिष्ठन् 'विभाकर–' इति पठति ।

(ततः प्रविशति विटः ।)

**विटः**—('विभाकर–' इत्यादि पठति । सर्वतो विलोक्य ।)

आरूढैरुदयाचलं दिनपतेरुस्रैस्तमिस्रापहै-
रारक्तं पुरतोऽन्यतश्च विपुलंध्वान्तावलीमेचकम् ।
एतद्दिग्वलयं विभाति बलभिन्नीलाश्मभिर्निर्मितं
दामेवोज्ज्वलपद्मरागघटितश्रीमन्महानायकम् ॥ १८ ॥

अपि च ।

चोकूयन्ते विहंगा दिशि दिशि निजनीडद्रुमाग्रे निषण्णा
दोधूयन्ते [1]वहन्तास्तुहिनजलकणान्कुन्दगन्धं वहन्तः ।
लोलूयन्ते तमिस्रं दिनकरकिरणश्रेणयः शोणशोभा
बोभूयन्ते क्रमेण प्रकटिततनवः शैलगेहद्रुमाद्याः ॥ १९ ॥

(ऊर्ध्वमवलोक्य ।)

गोमण्डलेन शशलोहितलोहितेन
द्योमण्डलं सुरवधूजनकेलितल्पम् ।
शोणीकरोति भगवानरुणोत्तरीय-
श्रेणीपरिस्तृतमिव ग्रहनायकोऽयम् ॥ २० ॥

अये, क्रमेणोदञ्चित एवायम् । तथाहि ।

नक्तं फुल्लनभस्तमालकुसुमं सद्यस्तमःसंचयं
निर्धूयेव निपातयन्क्षितितले छायाकदम्बच्छलात् ।
प्रालेयानि च तन्मधूनि परितश्च्योतन्ति रक्तस्वभा-
जिह्वाग्रेण [2]विलेलिहन्निव(?) निधिर्भासामसौ दृश्यते ॥ २१ ॥

(अधोऽवलोक्य ।)

नग्नां वीक्ष्य नभःस्थलीं विगलितप्रत्यग्रधाराधर-
श्रेणीश्यामलवाससं पतिरसौ रक्तः स्वयं मुञ्चति ।

---

१. 'वहन्ता वायवः' इति क-पुस्तकटिप्पणी. २. 'विलेलिहन्' इत्यत्र नुमागमश्चिन्त्य 'नाभ्यस्ताच्छतुः' इति निषेधात्; यद्वा 'नञ्घटितमनित्यम्' इत्येतदाश्रित्येत्यभिमानः.

इत्यन्तश्चिरमाकलय्य नलिनी शोकातिरेकादिव
व्यादायाम्बुजमाननं विलपति व्यालोलभृङ्गारवैः ॥ २२ ॥

(समन्तादवलोक्य ।)

आलोक्यन्ते कथंचित्प्रतिगृहमबलाः कामुकैर्भुक्तमुक्ता
बाह्यालिन्दप्रदेशे नवरविकिरणान्सादरं सेवमानाः ।
प्रायो लुप्ताङ्गरागाः प्रतिपदविगलत्पुष्पधम्मिल्लमाल्या-
श्चैलैर्याथाकथाचग्रथनविशिथिलैश्छादितश्रोणिभागाः ॥ २३ ॥

अये, अतिक्रामति प्रभातवेला । तथाहि ।

द्यामालिङ्गति विश्लथय्य तिमिरस्तोमं करेण स्वयं
कूर्पासं विशदद्विजालिललितामेष त्विषामीश्वरः ।
तं दृष्ट्वा व्यथमानमानसतया सासूयरोषोदया-
त्संध्या संप्रति खण्डितेव सहसा देशान्तरं सेवते ॥ २४ ॥

अपि च ।

निःशेषशोषितहिमैः किरणैः खरांशो-
र्विश्वेषु वस्तुषु भृशं विशदीकृतेषु ।
चक्षुस्त्वगिन्द्रियनितान्तमदोत्कटेन
सद्यः सुखेन विचरन्ति समस्तलोकाः ॥ २५ ॥

(सविमर्शम् ।) अहो अनुचितमेवेदानीमिहावस्थानम्, यत्पूर्वेद्युरेव कार्यान्तरगौरवाद्देशान्तरं प्रति गन्तुकामेन प्रियसुहृदा मन्दारकेण निजदयितायाः सकलसुन्दरीजनमौलिमालायाश्चन्दनमालायाः पौर्वाह्णिकशर्वनन्दिनीपदारविन्दवन्दनक्रियानिर्वर्तनरूपकार्यभारो निरतिशयस्नेहभाजनताभाजि मयि साभ्यर्थनमावेशितः । किं च कार्यगौरवातिशयादासायमात्मविलम्बमाशङ्कमानेन सर्वथापि महोत्सवारम्भसमयसमागमनमभ्युपगच्छता प्रदोषकरणीयोऽपि कार्यभारो मय्येव पाक्षिकत्वेन समर्पितः । तत्त्वरितमेवात्मनः स्नानादिकं विधाय तदालयं प्रति गमिष्यामः । (इति परिक्रम्य । पुरतो विलोक्य ।) कोऽयमन्यतो जिगमिषुर्मां विलोक्य मदभिमुखमेवागच्छति । (निर्वर्ण्य ।)

[illegible] ।

अये, सारसिकायाः सारस्य सर्वस्वभाजनमेष सामुद्रिको नाम द्विजकुमारः । अयं खलु

यत्किंचित्पितृसंचितं निजगृहे प्रच्छन्नगुप्तं धनं
तत्सर्वं परिहृत्य वेशवनितालोकेषु कृत्वा व्ययम् ।
प्राप्तः सारसिकावशत्वमधुना निष्किंचनोऽप्यात्मनः
कामान्पूरयितुं करोति विवशस्तद्भृत्यकृत्यान्यहो ॥ २६ ॥

अये, आत्यन्तिकं किमपि विवक्षुरिवाशुतरमुपसर्पत्यसौ । तदहमप्येनमनुवर्ते । (इत्युपसृत्य ।) सखे, विदितभवदीयवृत्तान्तस्य 'कुतस्त्वम्' इत्यनुयोगोऽनुचित इति 'कुत्र प्रस्थितः' इत्येतावदेवानुयुज्यते । किं ब्रवीषि—'आबाल्यपरिशीलितक्रयादिव्यवहारकौशलसंपादितबहुधनसंपत्तृणीकृतधनदस्य धनदत्त इति प्रथितनामधेयस्य वणिगधिपस्य निकेतनं प्रति केनचित्कार्येण प्रस्थितोऽस्मि' इति । (स्वगतम् ।) प्रणयिनीप्रसाधनसाधनप्रणयनापेक्षैव तत्कार्यमिति भवितव्यम् । यतः ।

सत्स्वपि स्वगृह एव वधूनां भूषणेषु न कदाचिदलंता ।
पूरितस्य सलिलैरपि सिन्धोर्जायते सितकरोदयवाञ्छा ॥ २७ ॥

किं च ।

एष एव बहुभूषणतायाः साधनस्य समयः प्रमदानाम् ।
उत्सवोऽयमिह लोकजनन्या यत्समागमसुमानुषलोकः ॥ २८ ॥

अपि च ।

कामुकादधिगतं प्रमदानां प्रीतिकारणमुशन्ति बुधा यत् ।
तस्य च प्रमद एव हि यत्नस्तत्पदार्थसमुपाहरणाय ॥ २९ ॥

भवत्येवम् । (प्रकाशम् ।) सखे, किं तत्कार्यम् । किं ब्रवीषि—'कालविलम्बमसहमानस्य तस्यैव कार्यस्य हेतोर्विस्तरतो गदितुं नायमवसरः, संक्षेपतस्तु कथयामि प्रणयिनीविषयं तदित्यवेहि' इति । सखे, किं तर्हि विलम्बसे । किं ब्रवीषि—'अन्तरापतितं किमपि कार्यान्तरं भवते

1. 'विशेषात्' क-पुस्तकशोधितपाठः.

विज्ञापनीयमस्ति' इति । सखे, कथ्यतां तत् । किं ब्रवीषि—'अद्य प्रभात एव प्रियामन्दिरान्निर्गत्य प्रतिवेशिन्याश्चन्दनमालायाः पुरद्वारपरिसरेण प्रयान्तं मामवलोक्य सरभसोपगता सा किमप्यभ्यर्थितवती' इति। सखे, किमस्मदागमनत्वरणाविषयमेव तदभ्यर्थनम् । किं ब्रवीषि—'अथ किम्' इति । सखे, तर्हि साधयतु भवान्। साधयतु च प्रिया कार्यम्। वयमपि त्वरितमेव तदीयालयं गमिष्यामः। (इति परिक्रम्यावलोक्य च।) अये, महातटाकोऽयं नयनपदवीमवतरति । एष खलु

भुवनजननीकेलीयात्रोत्सवावलुलोकिषा-
तरलितहृदां द्रागेत्य द्यां कृतस्थितिकर्मणाम् ।
त्रिदशसुदृशां स्रस्तो हस्ताम्बुजादिव दर्पणः
स्फटिकविमलैः पूर्णस्तोयैः करोति मुदं दृशोः ॥ ३० ॥

किं च ।

चञ्चद्भृङ्गकनीनिकस्फुटतरश्रीपर्णपर्णेक्षणा
कश्मीरप्रभवाङ्गरागरुचिरा बालारुणीयैः करैः ।
प्रच्छन्ना नवपुण्डरीकरजसा चेलेन चिल्लीमती
बालोर्मिप्रकरैः करोति न मुदं बालेव किं दीर्घिका ॥ ३१ ॥

(समन्तादवलोक्य।) अये, बहुजनैर्बहुविधमासेव्यते सेयम् । तथाहि ।

तीरेषु प्रचरन्ति केचिदपरे तिष्ठन्ति संभाषिण-
स्तीर्थेष्वेव निषद्य केचन पुनः कुर्वन्ति संध्याव्रतम् ।
कृत्वा कुक्कुटिकासनं कतिपये धावन्ति तोयान्तिके
दन्तान्स्नान्ति परे परेषु सलिलं क्षिप्त्वा हसन्तः स्वयम् ॥३२॥

अपि च ।

नम्रोन्नम्रशिरःप्रतिक्षणपरिस्पष्टाननाम्भोरुहं
वल्गद्वल्गुपयोधराहतजलं पल्यूलयन्त्यः कचान्।
काश्चित्तद्वदिहापराश्च निमितश्रोणीदुकूलाञ्चला-
नाप्लावं सुदृशो मुहुः कृतपयश्छात्कारमातन्वते॥ ३३ ॥

तदहमप्यत्रैव स्नानादिकं निर्वर्तयामि । (इति परिक्रम्यावतरणं नाटयित्वा ।) अहो, अतिमहनीय एवायमुदभारः, यदविरलजनतावगाहनेनापि न कलुषीभवति । (नाट्येनावगाह्य स्नानादिकं निर्वर्त्योत्तीर्य ।)

आह्लन्नः सह पञ्चभिश्च करणैरात्मा ममेदं जलैः
फुल्लन्मञ्जुलकंजपुञ्जविसरत्सौगन्ध्यसान्द्रीकृतैः ।
पर्यन्ताप्लवमानवारवनितासंल्लापवाचालितै-
र्गण्डूषादिविधानबोधितनिजस्वादुत्वसंपत्तिभिः ॥ ३४ ॥

किं च । विमलकमलावगाहनविरजीकृतेयं विराजते निराभरणापि निराकृतकुसुमशराकृतिर्मदीयाकृतिः । संप्रति पुनरस्या अनपेक्षितमप्यनुलेपनादिकमखिलजनाचारविषयतया करणीयमेव । तदत्रैव कुत्रचित्प्रदेशे सर्वं निर्वर्तयामि । (इति परिक्रम्योपविश्य नाट्येन सर्वं निर्वर्त्य ।)

आपादलम्बिविधृते कनकोज्ज्वलाग्रे
द्वे वाससी विशदकोमलसूक्ष्मसूत्रे ।
अंसे च तुल्यचतुरस्रतनुः पटोऽयं
क्षिप्तो विचित्रपरिधिर्नवकुङ्कुमश्रीः ॥ ३५ ॥

कस्तूरिकातिलकमाहितमाननान्ते
हस्तौ च साधु रचितौ कनकाङ्गुलीयैः ।
पाटीरपङ्कसरसं च भुजान्तरालं
जातोऽस्मि हन्त रसिकेष्वहमग्रगण्यः ॥ ३६ ॥

अतः परमविलम्बितमेव गन्तव्यदेशं प्रति गन्तव्यम् । (इति प्रस्थानं नाटयित्वा ।) अहो, प्रातः प्रियामन्दिरान्निर्गमनवेलायामत्यन्तावश्यकेषु पदार्थेषु परिगृह्यमाणेषु नित्यं मम हस्तभूषायितं तालवृन्तमनवधानभ्रष्टम् ।

लीलाविधूतिजनितानिलवार्यमाण-
क्षोणीरजःप्रसरमात्मकरे धृतं यत् ।
चूडामुपर्युपरि विभ्रमचङ्क्रमेषु
छत्रीकृतं च कुरुते परिपूर्णतां नः ॥ ३७ ॥

तत्केनोपायेनेदानीं तदानयनम् । (पुरतो विलोक्य ।) अये, आशास्यमानमेव वस्तु स्वयमुपतिष्ठते । यदियमस्मत्प्रियायाः परिचारिका पद्मगन्धिनी नाम चेटी तदेव तालवृन्तं गृहीत्वा सरभसं मामुपसर्पति । हञ्जे, प्रमादपरिभ्रष्टं मदीयमिदं तालवृन्तं मत्समीपमानयसीति महान्मे प्रमोदः । किं ब्रवीषि—'युक्तमेतत् ।

प्रियताविषयं हि वस्तु यत्क्षणनष्टं पुनरेति दृष्टताम् ।
तदतिप्रमदाय योषितां विरहानन्तरजेव संगतिः ॥ ३८ ॥'

इति । हञ्जे,

कथमेतत्करस्थं ते कुतश्चात्रोपनीयते ।
मदीयत्वेन विज्ञानं कथं चास्य त्वयोच्यताम् ॥ ३९ ॥

किं ब्रवीषि—'आर्य, भवत्प्रिययैवेदं मदीयहस्ते समर्पितम्, प्रियतमहस्तभूषायमाणमेतत्प्रमादपरिभ्रष्टं सपदि तदीयसविधमुपनीयताम्, यदमुना विना स विमना न कदाचिदपि बहिश्चरतीति । तदहं त्वरितमेव तदादाय भवदन्तिकमानीतवती' इति । (सहर्षम् ।) हञ्जे, न खल्वियं सकलवधूजनसाधारणी प्रियहितवेदिता । संप्रति हि ।

स्वार्थेनैव निधाय चेतसि मुहुः प्राणेश्वरोऽयं ममे-
त्युद्घोषत्यनुवर्तते च पुरुषं तत्तत्प्रियाराधनैः ।
नो जानाति कदापि तस्य तु हितं निष्किंचनत्वे पुन-
स्त्यक्त्वा तं भजतेऽन्यमीदृशदशः प्रायेण योषाजनः ॥ ४० ॥

किं ब्रवीषि—'परहितकरणैकरसिकेन भवता सह चिरपरिशीलनं सुदृशामपि तत्त्वमावहति' इति । (विहस्य ।) हञ्जे, संप्रति सुहृत्कार्यगौरवेण त्वरावन्तो वयम् । तत्क्रियतामविलम्बितमेव तदादेशः । किं ब्रवीषि—'आर्य, गृह्यतामिदं व्यजनम्' इति । (गृहीत्वावलोक्य ।)

नानाधातुरसोपलेपललितं सौवर्णबन्धोल्लस-
त्तिर्यग्भावितवृन्तमुष्टिशिखरप्रेङ्खत्कलाचीगुणम् ।
प्रत्यग्रस्फुरदभ्रबिन्दुविगलज्ज्योत्स्नावलीभासुरं
हस्तस्य व्यजनं ममेदमधुना पुष्णाति लक्ष्मीं पराम् ॥ ४१ ॥

हञ्जे, किमवशिष्टमस्ति । किं ब्रवीषि—'आर्य, एतावानेव तदादेशः' इति । तत्साधयतु भवती । वयं च साधयामः । (इति परिक्रम्य ।) अये, चन्दनमालाया मन्दिरबहिर्द्वारमिदमालोक्यते ।

यत्राङ्गणे सरसगोमयपङ्कलिप्ते
प्रत्यूष एव निहितानि सुमानि भान्ति ।
अङ्गीकृते प्रियसखीवपुषि स्मरेण
त्यक्ताः शरा इव युवाहतये गृहीताः ॥ ४२ ॥

(सत्वरमुपसृत्य प्रवेशं नाटयन् ।) अये, चन्दनमालेयं भगवतीचरणारविन्दवन्दनप्रयाणोचितवेषपरिग्रहा तिष्ठति । इयं हि

सुस्नाता परिधाय सूक्ष्मविशदं वासः सुगन्धोज्ज्वलं
बिभ्राणा निटिले शशाङ्कसुभगं सिन्दूरबिन्दूदयम् ।
वक्षोजद्वितयं प्रकोष्ठविलसच्चेलान्तराच्छादितं
कुर्वाणा कमलेव भाति विविधालंकारझंकारिणी ॥ ४३ ॥

अपि च ।

वदनविजितप्रत्यासन्नप्रबद्धविभावरी-
रमणकनकाम्भोजभ्रान्तिप्रदोज्ज्वलकुण्डला ।
हरिणविजितौ नीले नेत्रे वराटनिराकृता-
वपि मणिमयीं नासाभूषां विराजति बिभ्रती ॥ ४४ ॥

राका मुखेन दशमी च कपोलकान्त्या
फालेन पञ्चमतिथिः प्रतिपन्नखाङ्कैः ।
एषा कुहूरपि कचप्रकरेण धत्ते
प्रायः समस्ततिथिसंग्रहभाजनत्वम् ॥ ४५ ॥

किं च ।

अमृतमिव समस्तं गात्रमस्याः प्रशस्तं
किरति नयनयोर्नः कीर्णकर्पूरचूर्णम् ।
तृषिततरुणलोकस्तोककप्रीतिदान-
प्रसितहसितलक्ष्मीविद्युदुद्द्योतमानम् ॥ ४६ ॥

अये, इयं मदागमनमेव प्रतीक्षमाणा तिष्ठति। तदेवं भणामि—अयि प्रियसखि, किमस्मदागमनविलम्बनेन विमनीकृतासि। किं ब्रवीषि—'नहि नहि, सुमनीकृतैवास्मि' इति। (स्वगतम्।)

सभ्रूभङ्गकटाक्षवीक्षणविधेः पश्चात्तनैरक्षरै-
रक्षान्ति प्रकटीकरोति वनिता सुव्यक्तकाकुस्वरैः।
आस्तामेवमुदीरये

(प्रकाशम्।)

प्रियसखि क्षिप्ते किमसत्पथे
त्यक्तोन्मेषनिमेषमेव सुचिरं स्वे लोचने सादरम्॥ ४७॥

किं ब्रवीषि—'हन्त तथाविधविलोकनस्य रमणीयं पात्रमसि' इति। (स्वगतम्।) अहो, इयं कोपकलुषीकृता मद्वचनाभिप्रायं न जानाति, तद्विवृतमभिधास्ये। (प्रकाशम्।) अयि प्रियसखि, कथमनिमेषताकरणमन्तरेण सुमनीकरणकर्तृत्वमागमनविलम्बस्य, यत्सुमनस्त्वसाधनसामग्र्यां त्वय्यनिमेषतैव केवलमवशिष्यते। तथाहि।

आवासभूतमतिमानुषसद्गुणानां
रूपं दृशोरमृतवर्षि बिभर्षि भद्रे।
आसेव्यसे च पुरुषैरजरैरजस्रं
देवीं तथापि न वदन्ति निमेषतस्त्वाम्॥ ४८॥

इत्यस्माभिस्त्वद्वचनश्रवणानन्तरं तदेवोत्प्रेक्षितम्। किं ब्रवीषि—'जानामि ते स्तुतिपाटवम्' इति। (विहस्य।) मुग्धे नेयं स्तुतिः, किंतु तत्त्वकथनमेव। किं ब्रवीषि—

स्तुतिर्वा निन्दा वा भवतु किमनेनात्र भवता
विधेयं यत्कार्यं सपदि करणीयं तदधुना।' इति।

(स्वगतम्।)

अये त्यक्तप्रायं कुपितमनया यत्स्मितमुखी
प्रसादः कोपो वा न खलु चिरभावी मृगदृशाम्॥ ४९॥

(प्रकाशम् ।) प्रियसखि, तर्हि प्रतिष्ठतां भवती । किं ब्रवीषि—'भवतैव पुरो गन्तव्यम्' इति । भद्रे, मा तावदेवम् । यतः ।

मन्दारकस्य दयितासि मनोहराङ्गि
तस्यैव सांप्रतमनुव्रजनं भवत्याः ।
देशान्तरेऽपि खलु जीवति जीवनाथे
नान्यस्य पृष्ठमनुगन्तुमुशन्ति नार्यः ॥ ९० ॥

किं ब्रवीषि—'आर्य, तत्रभवतो भवतश्च सौहृदातिशयादभेदमेव गणयामि। कथमन्यथा त्वयि विलम्बमाने ममायं मानसविकारः ।

प्रेम्णः प्राप्नोति यः स्त्रीणामतिमात्रस्य पात्रताम् ।
स एव कोपविषयो नान्यः साधारणो जनः ॥ ९१ ॥'

इति । भद्रे, इमान्येवाक्षराणि त्वदाननचन्द्रसुधारसबिन्दूयमानानि चिराय पिपासन्ती चकोरिकायते मत्कर्णयुगली । इदानीं तु यद्भवत्यै रोचते तत्करिष्यामि । (इति परिक्रम्य वलितकंधरं पृष्ठतो विलोक्य ।) इयमनुगच्छति । अस्यास्तु

पादाम्भोरुहमन्दमन्दवसुधाविन्यासलीलाचल-
द्दोर्दण्डाञ्चलविश्लथांशुकमुहुःप्रत्यक्षवक्षोरुहम् ।
यातायातविधायिबाहुलतिकाभूषाझणत्कारितं
यातं मत्तमदाबलेन्द्रमधुरं सूते मुदं चेतसि ॥ ९२ ॥

(पुनरपि परिक्रम्य पश्चाद्विलोक्य । स्वगतम् ।) अये, मन्दायते गतिरस्याः । (किंचिदुच्चैः ।) अयि प्रियसखि, किमपि विप्रकृष्टासि संवृत्ता। तत्त्वरतां भवती । किं ब्रवीषि—'गुरुतरस्तनजघनभारमन्दगामिनीनां कामिनीनां कथं पुंभावः सिध्यति' इति । (सस्मितम् ।) भद्रे, केरलविषयजातासि । (स्वगतम् ।) अये, इयं व्रीडावनतमुखी मौनमेवावलम्बते । तदेवं भणामि । (प्रकाशम् ।) भद्रे, कुतस्तवायं मन्दाक्षः । किं ब्रवीषि—'अविद्यमाने पुरुषान्तरे कः संदेहः' इति । प्रियसखि, न खल्वपरिचितोऽयं जनः । अथवा जानामि वेशाङ्गनावंशसंभवामपि भवतीमतद्धर्मिणीम् । इदं च

१. 'अन्येभ्योऽपि दृश्यते' इति वलच्.

शालीनताशालिनि कामिनीनां कुले कु(कि)लोद्भूतिजुषां त्रपायाः ।
व्यक्तापवादान्न विशेषचिन्ता नह्यस्ति नित्यं मनसि स्थितायाः ॥ १३ ॥

(किंचिद्विलम्ब्य ।) अयि, संनिकृष्टासि । इतः परमेवमेव गन्तव्यम् । अन्यथा दुरवस्था भविष्यति । तथाहि ।

आवासं समया गिरीशदुहितुः संप्राप्तयोरावयो-
र्बाह्यायां यदि विप्रकर्ष उदयेद्वीथ्यां प्रमादादिना ।
आशौचप्रदसंनिधानगमनैराबालवृद्धाङ्गना-
युक्तैः शौण्डिकपूरुषैः परिभवः स्यादन्तरापातिभिः ॥ १४ ॥

किं ब्रवीषि—'आर्य, एवमेवैतत् ।

बहवो बहुदेशेभ्यः शौण्डिकाः शुण्डिनीयुताः ।
तत्रागच्छन्ति जननीयात्रामहदिदृक्षया ॥ १५ ॥' इति ।

(परिक्रामन् ।) इत इतो दक्षिणेन भवती । किं ब्रवीषि—'कोऽयमपरः पन्थाः' इति । (स्वगतम् ।) अयमनया परिचितोऽप्यपरिचित इव पृच्छ्यते । अथवा महतः कालस्य गतत्वादस्त्युपपत्तिः । भवत्वेवम्, स्मारयामि तावदेनाम् । (प्रकाशम् ।)

ऋजुतनुरयं मार्गो मार्गीनिवाससमीपग-
क्षितिपतिपुरद्वारोपान्तस्थलीमुपतिष्ठते ।
शशिमुखि भवत्पादाम्भोजद्वयस्य कदापि न
प्रहतिविषयः पूर्वं जातः किमेष विमृश्यताम् ॥ १६ ॥

(सकुतुकं विलोक्य । स्वगतम् ।) अये, इयं निरतिशयानन्दमयीं तामेव दशामिदानीं प्रत्यक्षीकरोति । तथाहि ।

अधो दृष्टिं न्यस्य क्षिपति भुवि पादौ मृदु मृदु
प्रणद्धं रोमाञ्चं वहति च मुहुर्गण्डतलयोः ।
अखर्वैरुच्छ्वासैः किसलयमिवार्कस्य किरणै-
रियं भूयो भूयो ग्लपयति रदानां च वसनम् ॥ १७ ॥

(प्रकाशम् ।) किं ब्रवीषि—'आर्य, किं स एवायं पन्थाः' इति । भद्रे, अथ किम् । किं ब्रवीषि—

'परिणामविशेषभिन्नपार्श्वद्रुमवल्लीविटपादिरेष पन्थाः ।
कुरुतेऽन्यधियं चिरेण दृष्टः प्रवसन्मर्त्य इवादिकाल एव ॥ ५८ ॥'

इति । प्रियसखि, एवमेवैतत् । किं ब्रवीषि—'भवद्वचनेन स्मारितोऽयं पन्थास्तामपि दशां स्मारयति' इति । भद्रे, विज्ञातमेतत् । इदमन्यच्च पृच्छ्यते ।

प्रावृट्काले पुरा त्वं कुहचन तिमिरैरावृतायां निशाया-
मभ्याशं नीयमाना स्वयमवनिपतेस्तस्य गूढं मयैव ।
भ्रष्टा भूमौ ममैषा तडिदिति तडितां पत्युराकस्मिकेन
त्रस्ता घोरारवेण स्मरसि सरभसं गाढमाश्लेक्ष्यसे माम् ॥ ५९ ॥

किं ब्रवीषि—'कथमिव न स्मर्यते' इति । भद्रे, तदानींतनी दशा किमिदानीं शोकरूपतया परिणमते । किं ब्रवीषि—'सत्यम् ।

आषोडशं मम वयः कमिता स राजा
नेतासि च प्रणयविश्वसनैकपात्रम् ।
तारात्रयश्च तडिदुल्लसितप्रदीपा
यत्राभवन्स खलु मे गत एव कालः ॥ ६० ॥

इत्येष मे शोकः ।' इति । भद्रे, तस्मिन्गतेऽपि तादृशस्य भवितव्यता नासंभविनी । किं ब्रवीषि—'न खलु शरीरान्तरमन्तरेण वयसा तादृशत्वं संभवति' इति । भद्रे, सम्यक् । एवं भवतु । गच्छावः । (इति परिक्रम्य पुरतो विलोक्य ।) अयि प्रियसखि, स्वैरसंलापवशादविदितपन्थाना(?)वेव प्राप्तौ स्वः प्रमथनाथप्रियसुताप्रासादप्रवरपरिसरप्रदेशम् ।

आलोक्यन्ते समन्तादिह खलु बहवः पूरुषाः संचरन्तो
नानादिग्भ्यः समेताः सह विहितवपुःसंस्क्रियाभिः प्रियाभिः ।
संभूयोज्जृम्भमाणैर्घनजलकणवत्प्राप्तगम्भीरभावै-
र्येषां संलापघोषैः परिहसति पयोराशिमेष प्रदेशः ॥ ६१ ॥

किं च ।

केचिद्देवीपदाब्जं स्वयमपर इह स्वात्मजैर्वर्षजातै-
रन्ये तत्स्तोत्रगानं निजशिरसि परे तत्पदाम्भोजपुष्पम् ।

प्रादक्षिण्यं च तस्याः कतिचन कुसुमैरर्चनं केऽपि विप्रा-
न्वन्दन्ते वन्दयन्ते विदधति दधते कुर्वते कारयन्ते ॥ १२ ॥

अपि च ।

वेलातीतस्य सिन्धोरधियुगविलयं भूतलं व्याप्नुवद्भिः
पाथोभिर्वेष्टितोपत्यक इव सविधक्ष्माधरः शर्वपुर्याः ।
प्रासादोऽयं महात्मा बहुविधवचनोद्गारिभिर्वार्यमाणो
नानादेशीयलोकैर्विलसति कनकस्तूपिकादीपितश्रीः ॥ १३ ॥

किं ब्रवीषि—'आर्य, स्वत एव रमणीयमिदमम्बिकानिलयनम्, इदानीं पुनरतिशयेन' इति । भद्रे, कः संदेहः ।

मनः प्रमोदं मिषतो ममेदं निमेषराहित्यमिमे च नेत्रे ।
गिरः स्तवाय स्वयमुद्गमेच्छां धत्ते दधाते दधते नितान्तम् ॥ १४ ॥

किं ब्रवीषि—'आर्य, एवमेतत् ।

पुरं पुराशामहितस्य पुर्याः किरं चराणां प्रणिपातुकेषु ।
इदं नराणां कुरुते न केषां मुदं सुराणामपि सेवनीयम् ॥ १५ ॥'

इति । अयि प्रियसखि, इतः पश्चिमतो दृष्टिः प्रसार्यताम् । अत्र हि

दत्त्वानुलेपकुसुमादिकमम्बिकाया
निर्माल्यमेतदिति भक्तिमते जनाय ।
काचादिकं कणश एव ततो गृहीत्वा
संचिन्वते युवतयः प्रतिदत्तमस्मात् ॥ १६ ॥

किं ब्रवीषि—'आर्य, किमेताः क्षेत्रसंबन्धिन्यः सीमन्तिन्यः' इति । भद्रे, अथ किम् । अपि च ।

संलापैरमृतोपमैः सरसया भ्रूवल्लिकालीलया
सर्वाङ्गीणसुरूपतामुखगुणैर्मन्दस्मितज्योत्स्नया ।
अप्याहूतनिमन्त्र्यमाणकतिचिल्लोकाः किमेताः स्त्रियो
वित्तोपार्जनमन्यदाप्यपरथाकर्तुं समुद्युञ्जते ॥ १७ ॥

अत्र काचित्

कर्पूरं मरिचं च हस्ततलयोर्धृत्वा किमाद्यं वरं
देव्यास्तोषकृतावुतान्तिममिति प्रश्ने कृते कामिना।
संध्यासुन्दरबन्धुजीवकुसुमं तस्मै स्वहस्तस्थितं
संदर्श्य द्वितयं निरस्यति सखीमध्यस्थितेयं वधूः॥ ६८॥

इयमपरा च

दित्सन्ती मलयोद्भवप्रसवयोर्भर्गात्मजाभुक्तयो-
रेकं द्व्यङ्गुलिकम्पितैरुभयमप्यभ्यर्थिता केनचित्।
साकूतं रसिकेन सस्मितमुखी नम्रा वधूस्तिष्ठते
वारस्त्रीष्वपि कारणस्य गुरुता व्रीडं किमप्यावहेत्॥ ६९॥

(किंचिच्छ्रवणमभिनीय।)

व्यक्तां पश्य पताकिकामिति वदत्यर्धोरुकं बिभ्रती
काचित्कंचन कुत्रचिन्महविधेरुद्दिश्य केतोः पटीम्।
सद्यः संवियती पटं कुचतटादुद्धृत्य कूर्प्यां पुन-
र्व्यक्तीभूतपयोधरा वितनुते यूनां दृशोरुत्सवम्॥ ७०॥

किं ब्रवीषि—'आर्य, दुःसहा खल्वीदृशी दशा, यत्र बहुविधव्यापारा जडिमानमुत्पादयन्ति' इति। भद्रे, सत्यमेतत्। तथा हि दृश्यते—

प्रसारिताभ्यां प्रसवं कराभ्यां प्रसादमादातुमशेषमातुः।
अह्नाय पश्यन्दिवमुन्मिषन्त्या गृह्णाति कश्चित्कुचमुत्पलाक्ष्याः॥ ७१॥

अपि च।

कश्चिज्जपाकुसुममीश्वरनन्दनाया
दत्तं प्रसादमधरोपममङ्गनायाः।
वक्त्रे निधाय मृदु चूषयते जनाना-
मुत्पादयन्विहसितं कृततन्मुखेक्षः॥ ७२॥

किं च।

किंचिद्ब्रवीमि निभृतं तव कर्णदेशे
श्रोतव्यमित्यनुमतो रसिकः कयाचित्।

आरब्धवाक्प्रसभचुम्बिततत्कपोलो
धावत्ययं जनहसे सति सा विलक्षा ॥ ७३ ॥

अपि च ।

कर्णे जपन्निव निमन्त्रयते कृशाङ्ग्याः
कश्चिद्युवा किमपि सा च सरोषदृष्टिः ।
एवं निरस्यति ततो वसनाग्रबद्धं
रूप्यं स दर्शयति सस्मितमीक्षते सा ॥ ७४ ॥

अयि प्रियसखि, इदं किमप्यद्भुतमवलोकय ।

कश्चित्कस्याश्चिदन्यं प्रति कृतवचसः प्राप्य पश्चान्निगूढं
पृष्ठव्यालम्बिवेणीभरमसकृदुपाघ्राय तिष्ठन्नबुद्धः ।
अग्रस्थानां प्रहासैररुणितनयनां तां परावर्तमानां
चक्राकारं परिभ्रान्भ्रमयति चतुरश्चित्रमत्रैव लीनः ॥ ७५ ॥

किं ब्रवीषि—'आर्य, अदृष्टचर एवेदृशो व्यापारः' इति । भद्रे, बहुविधेषु जनेषु किं किं संभवति । किं ब्रवीषि—'आर्य, कोऽयमिदानीमाकस्मिको वाद्यघोषः श्रूयते' इति । (कर्णं दत्त्वा विभाव्य ।) अये, महतीं कामपि सुवर्णमयीं प्रतिमां देव्या उपहारीकर्तुं वैदेशिकः कोऽपि वणिग्वरः सवाद्यघोषमागच्छति । किं ब्रवीषि—'अस्ति श्रुतम् ।

वैदेशिकैः कैश्चन भक्तिमद्भिर्विशेषवस्तूनि जनैर्जनन्याः ।
उपायनीकर्तुमुपानयन्ते सवाद्यघोषं प्रतिमादिकानि ॥ ७६ ॥

इति । भद्रे, पश्य पश्य । सर्वेऽपि तन्मार्गाभिमुखमुड्डीविकामाददते । किं च ।

वादित्रघोषदृष्टस्वहृदयनयनाः किमेतदिति कतिचित् ।
पुञ्जीभवन्ति सहसा तत्सविधमुपेत्य हन्त पञ्च जनाः ॥ ७७ ॥

किं ब्रवीषि—

'तुन्दीकृतः पश्य जनैरुपेतैः पुञ्जीभवद्भिः प्रतिमार्गमेषः ।
संघः समासीदति भिन्नसेतुः स्रोतस्विनीपूर इवाभ्रतोयैः ॥७८॥'

इति । भद्रे, किंचिदपसरावः । (इत्यपसृत्यावलोक्य ।)

क्षेत्रद्वारं प्रयाते पुरहरदुहितुर्देहिनामत्र संघे
पश्यैतासां वधूनामहमहमिकया क्रान्तपूर्वान्तराणाम्।
हस्ते मालार्थमर्थं दिशतु मम ममेत्यादरेणायतीनां
सद्यः पारावतानां खल इव गतयो भान्ति संभ्रान्तिभाजाम् ॥७९॥

किं च।

पारावतेक्षणनिभस्तनतापभाराः
काश्चित्त्रयोदशचतुर्दशवर्षजाताः।
यान्तीः पयोधरभरादलसं चिरण्टी-
र्गत्या विजित्य रभसादुपयन्ति बालाः॥ ८० ॥

अयि प्रियसखि, क्षणमत्र स्थित्वैतेषां संभेदमहोत्सवमवलोकयावः।
(इति तथा कृत्वा।)

अग्रे विन्यस्य देव्याः प्रतिकृतिमुपदां शुद्धहेम्नो विवर्तं
नत्वा तत्पादपङ्केरुहमथ विनिवृत्तेन संघाधिपेन।
एकस्यै दातुमात्ते वसुनि वसुमता संपतद्भूरिनारी-
संबाधेऽन्तःप्रविष्टाः कतिचन रसिकाः स्वेष्टमापूरयन्ते ॥ ८१ ॥

अपि च। इयं काचन तरुणी संबाधमसहमाना दुर्निवारघनाशया तरली-कृतहृदया परितो भ्रमन्ती साधिक्षेपम्

अपसरत युवत्यो मास्तु मास्तु स्वकार्ये
प्रसितहृदयता वः पृष्ठतः सन्ति काश्चित्।
परधनमपहर्तुं पापकर्माणि कर्तुं
मतिरियमतिकष्टेत्युच्चकैरुद्गृणाति ॥ ८२ ॥

भद्रे, पश्य पश्य। एषा निजवचनानादरजनितरोषारुणनयना योषाजनं पुनरपि निर्भर्त्सयन्ती निर्भयमेव परिभ्रमति

आः पुंश्चल्यः कथितमसकृन्नेदमाकर्णयध्वे
दुःसामर्थ्यं कुरुथ पुनरप्यस्तलज्जाविशङ्कम्।
दूरं दूरं विसरत न चेदस्तु दण्डानुभूति-
र्युष्मभ्यं तु प्रभुरहमिति प्रोच्चकैरुच्चरन्ती ॥ ८३ ॥

किं ब्रवीषि—'अहो अत्यन्तविषयाभिलाषिता नाम देहभाजामन्धंकरणी काचन पिशाचिका । यदियमनया परिभूता स्वदोषमपश्यन्ती परदोषमुद्घोषयति' इति । भद्रे, सत्यमेतत् ।

न व्रीडा न विनीतता न च भयं न स्याद्विवेकस्तथा
नापि न्याय्यपथस्थितिर्न च पुनर्दाक्षिण्यलेशोदयः ।
अत्यन्तोत्सुकचेतसां खलु नृणां कुत्रापि वस्तुन्यहो
क्रोधः केवलमाधिहेतुरनिशं स्थायित्वमालम्बते ॥ ८४ ॥

किं ब्रवीषि—'आर्य, पश्य । इयमन्या काचिदेतादृशीमेनामालोक्य तत्समानं स्वमनोविकारमपह्नुवाना विहसद्भिर्जनैः समं विहसन्ती संतिष्ठते' इति । भद्रे, आधुनिकानां जनानां स्वभावः खल्वयम्, यत्स्वदोषमपह्नुत्यापि परदोषमालोक्य परिहासः ।

सश्लीपदं निजपदं सिकतासु गूढं
कृत्वा निरीक्ष्य पुनरीदृशमन्यपादम् ।
उच्चैर्हसन्ति मनुजाः कृतहस्तताल-
मित्थं बुधाः खलु वदन्ति पुराणवाचः ॥ ८५ ॥

(अवलोक्य ।) अये शिथिलीभूय गत एवायं संघः । इदानीमेव भगवतीपदारविन्दवन्दनस्यावसरः । यतो विरलजनसंचारविषयतया विसंबाधगन्तव्योऽयं नासीरप्रदेशः । तत्त्वरितमुपसर्पावः । (इति परिक्रम्य तत्पदारविन्दं वन्दमानः ।)

देवि श्रीभद्रकालि प्रतिभटविषयक्रोधनिर्भिन्नभीम-
श्रीमत्फा(द्रा)लाक्षिकुण्डज्वलदनलशिखाकज्जलारब्धमूर्ते ।
नित्यं चित्ताञ्जनं मे भवतु भगवति त्वद्वपुश्छिद्रसार्द्रं
हत्यै नित्यामयानामखिलमुनिजनैरादरात्सेव्यमानम् ॥ ८६ ॥

(इति वन्दित्वा पार्श्वतो विलोक्य ।) अयि प्रियसखि, साञ्जलिबन्धं किमुपश्लोकयसे देवीम् । किं ब्रवीषि—

'कालिन्दीकमलं सजीवकमलं पश्चात्सुवर्णापगा-
संभूतं कमलं सबिम्बकमलं कुर्वञ्छिरः काम्बवम् ।

कुम्भौ खं पुलिनं ततश्च नलिनं रम्भातलस्थायुकं
यद्रूपं विदुरेवमुत्कटधियस्तस्मै नमो वस्तुने ॥ ८७ ॥'

[इति ।] भद्रे, साधु साधु ।

भीममपि भीमजायाः कलेवरं नवकलायकुसुमसमम् ।
सुन्दरमखिलगुणानां मन्दिरमेतत्समानमिदमेव ॥ ८८ ॥

(सहर्षम् ।) अये, अयमर्चकश्चर्चिकायाः प्रसादभूतं कुसुमचन्दनादिकमावाभ्यां प्रदित्समानः संमुखमागच्छति । भद्रे, तद्गृह्णीवहे । (इति करौ प्रसार्य ग्रहणं नाटयित्वा ।)

अतिसुरभिरयं प्रसूनराजिः शिवतनयापदपद्मभास्करोढः ।
शिरसि परिधृतः शरीरभाजां त्रिविधमपि प्रतिहन्ति दुःखजालम् ॥८९॥
इदं पुनश्चन्दनमिन्दुशीतलं बहिःस्थितं तापभरं न केवलम् ।
विहन्तुमाभ्यन्तरमप्यलंतरां निरन्तरं संततभक्तिशालिनाम् ॥ ९० ॥

(इत्युत्तमाङ्गे धारयित्वा ।) भद्रे, अयमर्चकः पुनरपि भवत्यै कामपि कुन्दकुसुमस्रजं वितरीतुमिच्छति । तत्समोदं प्रतिगृह्णीष्व । किं ब्रवीषि—'आर्य, किमिदं वधूजनेषु विशेषः' इति । भद्रे, नहि नहि । त्वय्येवायं विशेषः ।

आलोक्यते वदनमाश्वयुजीनिशोद्य-
त्पीयूषधामसुभगं सविलासहासम् ।
प्रीतः स्रजं तव निवेदयति द्विजोऽयं
बाणावलीमिव तदा प्रहितां स्मरेण ॥ ९१ ॥

(मालाविभूषितं चिकुरभारमवलोक्य ।)

कामक्रोधादिचेतोविकृतिविरहितैः श्वेतभावं भजद्भि-
श्चेतोभिर्योगभाजामिव कृतवलयश्लाघ्यमाघ्यप्रसूनैः ।
धम्मिल्लोऽयं भवत्याः समजननयनानन्दपूरप्रवर्षी
प्रान्तभ्राम्यद्बलाकावलिरिव जलदः प्रावृषेण्यश्चकास्ति ॥ ९२ ॥

भद्रे, इदानीं कृतकृत्यौ स्वः । तदितो निर्गच्छावः । यावन्न संबाधः समापतेत् । किं ब्रवीषि—'यदभिलषितमार्यस्य' इति । (इति परिक्रम्यावलोक्य च ।) अये, कोऽपि वनितासमाजोऽयं प्रस्थितयोरावयोरग्रतः सुशकुनीभूयागच्छति । अत्र काचिदारब्धयौवना

व्रीडापरश्वधविभिन्नकटाक्षकाष्ठै-
र्मन्दस्मितेन च मुखोदितमारुतेन ।
संधुक्ष्य रागदहनं युवचित्तकुण्डे
तद्धीरतामयमियं हविराजुहोति ॥ ९३ ॥

अन्या च

वैदग्धीमयमन्दराचलचलत्सारस्य साराम्बुधे-
र्बिब्बोकेषु विशेषवस्तुषु मुहुर्जातेषु हृष्टाङ्गनान् ।
उत्थाप्याथ कटाक्षरूपगरलं व्यामोहयन्ती क्षणं
पश्चात्तप्तमना इव स्मितसुधामुत्पाद्य सिञ्चत्यसौ ॥ ९४ ॥

अपरा च

झणितिरणितिरम्यस्वाङ्घ्रिमञ्जीरघोषै-
र्मनसि मनसिजेभं सुप्तमुद्बोध्य यूनाम् ।
विपदमुपदयन्ती तैः सरोषैरिवैषा
विमलकमलनेत्रा विध्यते दृष्टिबाणैः ॥ ९५ ॥

इतरा च

कृच्छ्रादाच्छिद्य बाल्यात्प्रसभमपहृतं यौवनेनाथ कृष्ट्वा
क्षेत्रं तत्रान्तरङ्गे सपदि कृतवता कामबीजप्रवापम् ।
लज्जापूराभिषेकादनवरतकृताद्रोपितं यद्विशेषा-
द्बिभ्रत्यङ्कूररूपं कुचयुगलमिदं दृश्यते कापि योषा ॥ ९६ ॥

किं बहुना । एतत्समाजघटिकाः सर्वाश्च

नासारत्नरुचिप्रवाहलहरीमज्जन्मुखाम्भोरुह-
व्याख्यातस्वकलेवराम्बुरुहिणीखेलन्मनोजद्विपाः ।
सद्यः सद्रवविद्रवत्सितपतत्संघोरुसंघोषणा
शङ्कोत्पादकपादभूषणरणा योषा न केषां मुदे ॥ ९७ ॥

किं ब्रवीषि—'आर्य, किमेतासु दृष्टमात्रासु सरागं ते मनः । यद्गतिमात्रममूः प्रशस्यन्ते' इति । (स्वगतम् ।) अहो वनिताजनानामितरवनिताप्रशंसनमतिदुःसहमेव । (प्रकाशम् ।) भद्रे, नेह शङ्कावसरः । यतः ।

युष्मादृशीषु सततं रममाणमन्तः
क्लिष्टं न रम्यमपि यौवतमेतदीष्टे ।
पीयूषमेव परिशीलयते जनाय
स्वच्छं सुशीतलमपि स्वदते किमम्भः ॥ ९८ ॥

किं ब्रवीषि—'आर्य, अस्त्वेवम् । गच्छावः स्वपुरं प्रति । किमिदानीमिहावस्थानेन' इति । (स्वगतम् ।) अहो, अस्या इदानीमपि न निःशङ्कं चेतः । भवतु । (प्रकाशम् ।) यदभिरुचितं भवत्यै । (इति परिक्रम्य ।) भद्रे, पश्य । वृद्धा काचिदियमद्धापथसंचरणबद्धादरपरिशुद्धान्तःकरणेव सद्धामदर्शने भृशमिद्धानुरागा समागच्छति । तथा हि ।

रुद्राक्षं कनकावबद्धमभितः प्रोतं गुणे पीवनि
ग्रीवायां दधती कषायकलुषं चेलं च कट्यां तथा ।
फा(भा)लोद्यद्धसितत्रिपुण्ड्रधवला मालां करे बिभ्रती
भक्तिर्मूर्तिमतीव गायति मुहुः पुण्यानि नामान्यसौ ॥ ९९ ॥

किं ब्रवीषि—'आर्य, मा स्म वेषमात्रेण प्रत्ययितो भूः । अहं तु जानाम्यस्याः प्रवृत्तिम् ।

अन्तर्धनं धनमिति स्वहृदा जपन्ती
वाचा बहिः शिवशिवेति च घोषयन्ती ।
अन्त्ये वयस्यपि धनार्जनलोलुभत्वा-
दालम्ब्य संचरति कैतवतापसित्वम्[1] ॥ १०० ॥'

इति । भद्रे, किं तर्हि किंचिल्लभ्यते । किं ब्रवीषि—

'अस्याः प्रीतिरशेषकल्मषहरा सर्वार्थचिन्तामणिः
सद्योदृष्टफलेति वञ्चितधियश्चेटीभिरेतज्जनैः ।
मूर्खाः केचन विश्वसन्ति वितरन्त्यर्थानदःप्रीतये
ये वृत्तान्तमिमं विदन्ति कृपयाप्यल्पं न तैर्दीयते ॥ १०१ ॥'

इति । भद्रे, एतादृशीनामसंभाषणमेव रमणीयम् । तदस्या अनभिमुखमेव

१. 'तापसीत्वम्. 'त्वे च' इत्यनेन बाहुलकाद्ध्रस्वः.

गच्छावः । (इति परिक्रम्य । श्रवणमभिनीय ।) भद्रे, अत्रत्यो राजा देवीदर्श-
नार्थमिदानीमागच्छतीति प्रतिभाति । तथा हि ।

नासीरभागचरपूरुषवीरघोषै-
रान्दोलिकावहनकिंकरहुंकृतैश्च ।
मेदस्वितः सघनकाहलनादमिश्रो
राजानमागमयते पटहप्रणादः ॥ १०२ ॥

तत्क्षणमप्यत्र स्थित्वा राजदर्शनेनात्मानं कृतार्थयावहे । (इति तथा स्थित्वा विलोक्य ।) अये, नयनविषयतामवलम्ब्यते महाराजागमनसहगामी जन-
समाजः । इदानीं तु

केचिद्धावन्ति तिष्ठन्त्यविकृतमपरे दूरतः केऽपि पश्य-
न्त्यन्ते केचिच्चरन्ति प्रमुदितहृदयाः केऽपि माद्यन्ति हृष्टाः ।
एवं नानाप्रकारान्विदधति मनुजाः पश्य चेष्टाविशेषा-
न्दृष्ट्वा सूत्रायमाणं वरवरगमनं भावि देव्युत्सवस्य ॥ १०३ ॥

अयं च

रक्तोष्णीषधरैर्नरैरुभयतः कार्पासकूर्पासिभिः
सौवर्णोज्ज्वलदण्डमण्डितकरैरान्दोलिकामन्वितैः ।
अग्रे व्यग्रतरैर्जनापनयने भृत्यैरुदस्तायुधैः
पश्चात्केवलसेवकैश्च सहितः सम्राट् समागच्छति ॥ १०४ ॥

अपि च ।

पटहमुखपटुरटितमुखरितनिखिलकुलगिरिगह्वरः-
परुषतरपुरुपरिचरपुरुषपरिषदुपचितपौरुषः ।
धवलकरकरबहलमदभरकवलकरसितचामर-
व्यजनविजनितपवनविगलितधरणिभवरजउत्करः ॥ १०५ ॥

यशसि विजयिनि विवशमुपनमदकृशसितकरकान्तिभा-
गुपरिपरिलसदपरिमितरुचिनिकररविकरवारणः ।
अहितबलकुलविहितहतिमतिरवितनतसुमनोगुणः
किरति नरपतिरमरपतिरिव नयनमुदमतिशायिनीम् ॥ १०६ ॥

किं ब्रवीषि—'आर्य, साधु साधु। सकलजननयनाकर्षणसिद्धमन्त्रायमाणकलकलरमणीयोऽयं महाराजागमनमहोत्सवो देवीविलासगमनमहोत्सवात्तातीव हीयते नयनानन्दकरणविषयः' इति। भद्रे, सत्यम्। (सहर्षं विलोक्य।) अये, समागतोऽयममन्दकान्तिकन्दलसुन्दरकलेवरस्त्रिभुवनसुन्दरीवदनारविन्दसिन्दूरबिन्दुरिन्दिराविलासमन्दिरमुर्वीपुरंदरो मन्दतरमन्दोलिकाया अवरुह्य पादचारेणैव पञ्चषाणि पदानि गत्वान्तः प्रविशति। किं ब्रवीषि—'आर्य, अयमेव सम्यगालोकनावसरो महाराजस्य। यतः।

विसृज्यान्दोलिकारक्तवनोदरदरीमिनः।
प्रविशत्येष जननीप्रासादचरमाचलम्॥ १०७॥

इति। ननु सम्यगालोकय। किं ब्रवीषि—'तथा करोमि' इति। (क्षणमवलोक्य।) भद्रे, अन्तः प्रविष्टोऽयं महाराजः। तदिदानीं किमिहावस्थानेन। स्वपुरं प्रति गच्छावः। किं ब्रवीषि—'महाराजदर्शनेनातृप्तं मे मनः' इति। भद्रे, जानामि।

चित्तमुत्कुतुकमस्ति देहिनां दृश्यवस्तुषु महोत्सवादिषु।
अस्ति चात्र विषये वधूजनो यत्पुमांसमतिशय्य वर्तते॥ १०८॥

किं तु बहुकार्यधुरंधरो महाराजश्चिरेण निर्गमिष्यति, कालश्चातिक्रामतीति त्वरामहे। किं ब्रवीषि—'इदानीं त्वदधीना कथं त्वदभिलाषं नानुरुन्धे' इति। (स्वगतम्।) अये, इयमिदानीं गमनं न सम्यगनुमन्यते। तदिदं भणामि। (प्रकाशम्।)

तृप्तिः क्व भद्रे विषयानुभूतौ पुनः पुनर्वर्धत एव काङ्क्षा।
देदीयमानेन घृतेन वह्निः प्रवर्धते जातु न शान्तिमेति॥ १०९॥

अपि च।

तृप्तिर्यदि स्यादिति मन्यसेऽसौ नक्तं यथेष्टं प्रविलोकनीयः।
प्रवर्तमाने चिरमुत्सवेऽस्मिन्नेता चरिष्यत्यवनीन्द्र एषः॥ ११०॥

किं ब्रवीषि—

'आ एवं जननीविलासगमनस्रोतस्विनीनिर्झरे
नानादिश्यजनावलीजलमये वक्रेन्दुवत्सद्विजे।

चञ्चत्स्त्रैणदृगण्डजे बहुलसद्दीपाम्बुजे संचर-
न्स्वैरं राजति राजहंस इति मे प्रत्यक्षदृष्टं मुहुः ॥ १११ ॥

किं तु अधुना राजदर्शनजनितप्रमोदातिरेकमहिम्ना क्षणं विस्मृतवत्यसि । तद्भवतु भवतु यथेष्टं भावस्य' इति । (सहर्षम् ।) तर्हि प्रतिष्ठावहे । (इति प्रस्थितः । परिक्रम्यावलोक्य ।) अये, किमिदं दिक्षु चपलायन्ते सर्वेऽपि जनाः । (विभाव्य ।)

मत्तः कोऽपि मतङ्गजः प्रचलितश्छित्त्वा बलाच्छृङ्खलां
चित्तं व्याकुलयन्समस्तजगतामुत्तुङ्गशैलाकृतिः ।
स्रस्तो हस्तिपकस्य हस्ततलतः कृत्तद्रुवल्लीकुलः
प्रत्यग्रस्तनितोग्रकण्ठनिनदः प्रत्यध्वमुद्भ्राम्यति ॥ ११२ ॥

भद्रे, तदावामप्यमुष्यामुत्तुङ्गविशालायामश्वत्थवेदिकायामारुह्य तिष्ठावः, यावदयं गृहीतबद्धो भवेत् । (इति तथा कृत्वा ।) भद्रे, पश्य पश्य ।

दिवस इव [1]सपद्मकाननश्रीर्नयनमुदं जनयन्नपि द्विपोऽयम् ।
रजनिरिव [2]तैमिस्रनीलमूर्तिर्जनयति चेतसि साध्वसं जनानाम् ॥ ११३ ॥

अपि च ।

[3]सद्दानको मह इव भीम[4]दन्तकः पुरारिवन्मुनिरिव [5]वर्तितश्रुतिः ।
द्विपाधिपः शशभृदिवो[6]च्चकैरवो विराजते सर इव लोल[7]पुष्करः ॥ ११४ ॥

किं ब्रवीषि—'तथा च सर्वे सकौतुकभयमवलोकयन्ते' इति । भद्रे, पश्य । अयमाधोरणप्रवरः साधारणप्रहरणबाधाकरणदुःसाधनीयमानी सद्योनिशातविद्योतमानधवलतराग्रप्रभासंचयप्रकटिततडित्प्रहासं कमपि प्रा-

---

१. दिवसपक्षे—पद्मैः सहिता काननश्रीः; द्विपपक्षे—पद्मकेन बिन्दुजालकेन सहिता मुखश्रीश्च यस्य. २. रजनिपक्षे—तमिस्रेण नीला; द्विपपक्षे—तमिस्रवन्नीला मूर्तिर्यस्य, यस्या वा. ३. द्विपपक्षे—दानेन मदजलेन सहितः; महपक्षे—विद्यमाना आनका यस्मिन्. ४. पुरारिपक्षे—भीमान्सभयोऽन्तको यस्मात् ; द्विपपक्षे—भीमौ दन्तौ यस्य. ५. मुनिपक्षे—वर्तिता श्रुतिर्वेदो येन; द्विपपक्षे—वलितकर्णः. ६. शशभृत्पक्षे—उच्चानि विकसितानि कैरवाणि येन; द्विपपक्षे—उच्चकैरुत्कटो रवो यस्य. ७. तडागपक्षे—लोलानि चञ्चलानि पुष्कराणि कमलानि वारीणि वा यत्र; द्विपपक्षे—लोलं पुष्करं कराग्रं यस्य.

समादाय निःशङ्कमेव विश्वंभराधरमिवाङ्गीकृतजङ्गमविग्रहमग्रत एवैनमभिगच्छति।

दृष्ट्वा तं पुरतोऽभियान्तमभिया यन्तारमन्धाशयो
बन्धुः सिन्धुर एष गाढतमसां रूढप्रकोपाङ्कुरः।
वृत्तीकृत्य निजश्रुतीः स्तिमितयन्नत्यन्तरक्तेक्षणो
व्यक्ताडम्बरमुन्मनादभिपतत्युत्कम्पयन्मेदिनीम् ॥ ११५ ॥

किं ब्रवीषि—'अनयोराधोरणमतङ्गजयोरीदृशीं प्रवृत्तिमालोक्याद्भुतरौद्रभयानकरसशबलितमपि किमिति वेपत इव मे हृदयम्' इति। इदानीं तु पश्य। समागतावुभौ यन्ता कुन्तेन दन्ती दन्तेन च प्रहर्तुमवसरं प्रतीक्षमाणौ परिक्रीडतः। (क्षणं निर्वर्ण्य।) अये, आधोरणेनातिनिपुणमुप्लुत्य पादाङ्गुष्ठे प्रासेन प्रहृतोऽयं मतङ्गजस्त्रिभुवनकटाहविक्षोभणक्षमं कमप्यतिघोरमारवमुद्गिरंस्त्रिचतुराणि पदानि पश्चादपसृत्य नितान्तनिष्ठुरदन्तकाण्डनिखातधरणितलं निपतति। (पार्श्वतो विलोक्य।) अये, प्रवातचलितेव गुल्मिनी भृशमुत्कम्पते प्रियसखी। तदेनां धारयामि। (इति धारणनाटितकेन।) भद्रे, मा भैषीः। एष ते रक्षाधिकारी पुरुषः पार्श्वत एव तिष्ठामि। किं ब्रवीषि—'आर्य, न केवलं भयेनैव वेपते मे शरीरम्। अपि तु कल्पान्तनिर्घातनितान्तनिष्ठुरमहाबृंहिताघातेन। तथा हि।

गम्भीरनिष्ठुरतरेण पयोधराणा-
माकस्मिकेन महता स्तनितेन सद्यः।
नैव द्रुमा न गिरयश्च परं धरित्री
सर्वापि संचलति सिद्धमिदं जनानाम् ॥ ११६ ॥'

इति। भद्रे, युज्यत एव। (पुरतो विलोक्य।) अये, हस्तिपकेन सत्वरमुपसृत्य कालायसनिर्मितया कयापि महतितरया शृङ्खलया निबद्धपादः स्ववचनवशंवदीकृतः शनकैरुत्थापितः सिन्धुरवरोऽयं बन्धनाय विजनसंचारं कंचन प्रदेशमुपनीयते। अयमिदानीं तु

कटगलितमदाम्बुगन्धलोभत्वरितसमागतयेव भृङ्गपङ्क्त्या।

मृदु मृदु विचलत्पदे निबद्धो विलसति शृङ्खलया मतङ्गजेन्द्रः॥११७॥

किं च ।

अभीषणत्वाय भवन्नपीदृशो धिनोति न प्रागिव मामिके दृशौ ।
निबद्धपादो निगडेन योऽधुना गतिं त्वदीयामनुकर्तुमक्षमः ॥ ११८ ॥

किं ब्रवीषि—'आर्य, गृहीतबद्धोऽयं महागजः । तदिदानीं प्रतिष्ठावहै' इति । यदभिरुचितं भवत्यै । (इत्यवरोहं नाटयित्वा परिक्रम्यावलोक्य ।)

सुजातपत्राङ्कुरैचित्रकाभा पुरश्चलत्पल्लवकालिसेव्या ।
कामप्रदा कल्पलतेव नृणां केयं समागच्छति कातराक्षी ॥ ११९ ॥

(विभाव्य ।) अये, इयं सा मदनमञ्जरीति प्रसिद्धनामधेया वेशवनिताचूडामणिः ।

सुव्यक्ताङ्गविभक्तिकां मृदुपदां सत्संधिबन्धोज्ज्वला-
मान्नायस्य शिखामिवोपनिषदं योषाकुलस्य श्रियम् ।
यामालिङ्ग्य मनांसि यौवनजुषां पाण्डित्यभाजामिव
व्यामुह्यन्ति वितन्वते च विविधां चिन्तां तदर्थाप्तये ॥१२०॥

भद्रे, दिदृक्षितेयं स्वयमुपस्थितेति प्रमोदते मे हृदयम् । किं ब्रवीषि—'आर्य, जानामि ।

या काचिदस्ति वनिता धरणीतलेऽस्मि-
न्दृष्टाथवा श्रवणगोचरतां प्रयाता ।
सा रूपिणी यदि निकृष्टतमापि जात्या
न त्यज्यते विटजनैरतिकामवद्भिः ॥ १२१ ॥'

इति । भद्रे, न खल्वस्यामनुरागितया द्रष्टुमिच्छामि । किंतु परकार्यसिषाधयिषयैव । किं ब्रवीषि—'किं तत्परकार्यम्' इति । भद्रे, शृणु । शिवदासशर्मणः श्रोत्रियवर्यस्यासवर्णक्षेत्रसंभवः सुकुमारो नाम पुत्रः समस्तयुवजन-

१. कल्पलतापक्षे—पत्राङ्कुरैः स्वल्पचित्राभा यस्याः; नारीपक्षे—८
श्राभा यस्याः. २. पल्लवकानां किसलयानां षिङ्गानामाल्या सेव्या. ३. उपनिषत्पक्षे—अङ्गतुल्या विभक्तयः प्रथमादयः; योषाकुलश्रीपक्षे—अङ्गानां विभक्तिः. ४. उपनिषत्पक्षे—संधिकार्यैश्छन्दोबन्धैः; योषाकुलश्रीपक्षे—कूर्पराद्यवयवसंधिबन्धैरुज्ज्वला.

चित्तदारुविदारणकरपत्रायितशतपत्रायतलोचनायां [1]रसिकत्राकृतयौवनायामस्यां मदनमञ्जर्यामङ्कुरितानुरागः पङ्कजसायकस्य किंकरतामुपगतः शङ्कितमानसतया मयि पुरुषान्तरमुखेन विज्ञापितनिजावस्थः 'सर्वथापि भवतैव साधनीयमस्मद्वाञ्छितम्' इति बहुवारं मामभ्यर्थितवान् । किं ब्रवीषि— 'ततस्ततः' इति । ततश्च वैदेशिकस्य कस्यचिद्वसुमतीसुरस्य वस्त्वपहरणाय प्रवृत्तायाः कृतानिशतदनुवर्तनायास्तस्या अवसराभावविज्ञायिना मया प्रत्याख्यातोऽपि पुनः पुनः सकरुणं सनिर्बन्धं च

यावद्गोचरतां गता नयनयोः सा पूर्णचन्द्रानना
तावन्मन्मथ एव मन्मथ इति ज्ञानं ममोत्पद्यते ।
तद्धीमन्नधुना यथाकथमपि त्रायस्व मामन्यथा
मारो मार इति प्रमां जनयितुं मारः समर्थो ध्रुवम् ॥१२२॥

इत्यादिभिरभ्यर्थनाभिः करुणारसमग्नं मदीयहृदयमकार्षीत् । किं ब्रवीषि— 'ततस्ततः' इति । ततश्च सकृदपि तदीयवाञ्छितं साधयितुं क उपाय इति चिन्तयता मया पुनरद्य निशायां देव्युत्सवावलोकनाभिलाषप्रदर्शनेन तां तदन्तिकादपनीय तद्वाञ्छितं साधनीयमिति प्रतिपन्नम् । तथैव तस्मै प्रतिश्रुतं च । किं ब्रवीषि—'उत्सवदर्शनार्थं प्रस्थितया प्रियया सह सोऽपि किं न प्रस्थाप्यते । यत्प्रायशः प्रियया सहैव सर्वेऽप्युत्सवादिदर्शनायोत्सहन्ते' इति । भद्रे, वैदेशिकः खल्वसौ नीरसिकेषु प्रथमोदाहरणम् । तस्य त्वेतादृशविनोदनेषु किमपि कुतूहलं न जायेत । प्रियानुरागमहिम्ना तद्गमनानुमतिस्तु कथंचिज्जायेतैव । किं ब्रवीषि—'आर्य, यद्येवम्, इदानीमेव दैवादुपनतायामस्यां निवेदनीयश्चिन्तितार्थः' इति । भद्रे, दैवं चिकीर्षते । (पुरतो विलोक्य ।) अये, संनिहितेयं सकलजनमानसकासारकुञ्जरी मदनमञ्जरी । एषा हि

कटौ ललाटे च [2]सचित्रकाञ्चिता करे कचे चो[3]त्कटकालिमाश्रिता ।

---

१. रसिकाधीनीकृतयौवनायाम्. 'तदधीनवचने च' इति त्राप्रत्ययः. २. कटौ—चित्रकाञ्चीविशिष्टा; ललाटे—चित्रकेणाञ्चिता. ३. करे—उच्चैः कटकानामालिम्; कचे—उत्कटश्यामहाविशिष्टा.

कुचे श्रुतौ च स्फुटगुच्छशोभिता विभाति सर्वत्र गुणैर्विभूषिता ॥ १२३ ॥
किं ब्रवीषि—'किमस्मत्परमिदमुपश्लोकनम्' इति। सुमुखि, कः संदेहः। किं ब्रवीषि—'इयं प्रियसखी चन्दनमाला च भवतः समीपे वर्तते' इति । (चन्दनमालां प्रति । जनान्तिकम् ।) भद्रे, कार्यसाधनायानुचितमपि कदाचित्कर्तव्यं भवति । किं ब्रवीषि—'तथैव' इति । (मदनमञ्जरीं प्रति ।) मत्तकाशिनि, जनोत्तमभाववत्यां भवत्यां समस्तगुणवसत्यां सत्यां परा का वराकी विराजते ।

महागुणानां पुरतो जनानां न शोभते स्वल्पगुणो मनुष्यः ।
खद्योतपृष्ठद्युतिरग्रतः किं विद्योतते शारदचन्द्रिकायाः ॥ १२४ ॥

(पार्श्वतो विलोक्य ।) चन्दनमाले, मदनमञ्जरीं प्रति किं ब्रवीषि—'सखि मदनमञ्जरि, यदार्यो वदति तत्तथैव । नत्वतिशयोक्तिरिति मन्तव्यम् । किं च इतः परमपि यदनेनोच्यते तदपि समीचीनतया ग्रहीतव्यम्' इति। (पुरतो विलोक्य ।) मदनमञ्जरि, चन्दनमालां प्रति किं ब्रवीषि—'न खल्वसत्यमकार्यं चार्यो वदति' इति । (सहर्षम् ।) सुमुखि, भवत्यां कश्चन वृत्तान्तो निवेदनीयोऽस्ति । किं ब्रवीषि सस्मितम्—'इदमिदानीमभुक्तलिप्सायां भुक्तवतो मोदकलिप्सा, यदकृतदेवीपदारविन्दवन्दनोऽयं जनः कृततदा(?) विलम्बयिष्यते भावेन' इति। सुमुखि, न खल्वस्मदुक्तौ प्राह्णकाले कृत्यम्, किं त्वपराह्णे । किं ब्रवीषि—'यद्येवम्, अपराह्णवेलायामस्मन्मन्दिरमलंकरणीयमार्येण' इति । (सविमर्शम् ।)

यद्यन्तरापतितमस्ति न कार्यमन्य-
न्निःसंशयं सुमुखि ते गृहमागमिष्ये(?) ।
नो चेदवश्यमिति पत्रिकया कयाचि-
त्स्निग्धेन वान्यपुरुषेण निवेदयिष्ये ॥ १२५ ॥

किं ब्रवीषि—'भवत्वेवम् । साधयामि' इति । (सहर्षम् ।) साधयतु भवती। (इति परिक्रम्य ।) अयि, भद्रे प्राप्तावेव स्वकीयमन्दिरसमीपम् । तथा हि ।

श्रूयन्ते शुकयोषितां भणितयः श्रोत्रप्रियंभावुका-
स्त्वद्गेहान्तिकसालकोटरजुषां त्वन्नामवर्णाङ्किताः।
दृश्यन्ते च तव क्रमेण निबिडैः प्रत्यग्रलाक्षारसै-
राताम्राणि पदानि सुन्दरि बहिर्द्वारे बहिर्वेश्मनः॥ १२६॥

अये, अत्यासन्नेयम्

पूगैराश्लिष्टनागव्रततिविततिभिः पूर्यमाणा समन्ता-
त्पालाशानुद्वहद्भिर्नृभिरिव कवचान्पालनाय द्रुमाणाम्।
केरैश्चैषां प्रधानैरिव कनकनिभस्तम्बचूडावतंसै-
र्मध्ये मध्ये लसद्भिः किरति दृशि मुदं तावकी वास्तुभूमिः॥१२७॥

अये, नयनविषयतां प्राप्नोत्येषा भवदीयवसतिः। इयं च

बाले तारुण्यभाजि त्वयि तरुणजयात्संचितैः पञ्चबाण-
स्यालेपात्कीर्तिसारैरिव धवलसुधाकर्दमैरुज्ज्वलात्मा।
प्रालेयांशुप्रकाशक्षयकरणकथाख्यायिभिः स्वामिनि स्वे
खेलन्त्यङ्के भवत्याः सविधमुपगतैर्भासते वासतेयी॥ १२८॥

तदिदानीं रमणीयतमाप्येषा त्वयान्तः प्रविश्यातिरमणीयतमा संपादनीया। वयं तु साधयामः। किं ब्रवीषि—'इदं तु सरसविरसतायाः प्रथमोऽनुभावः। यदेतावन्तं कालमेतं जनमनुवर्त्य संप्रत्यनभिमतं चिकीर्षसि' इति। भद्रे, किमभिमतं भवत्याः। किं ब्रवीषि—'आर्य, चिरं मदर्थमेव परिश्रान्तोऽसि। तदन्तःप्रविष्टस्य भवतः सजग्धिकादिभिः सत्कारैः श्रमापनोदमभिलषामि' इति। भद्रे,

भूते भूताः समये सत्कारास्ते भविष्यति भविष्यन्ति।
न भवन्तु वर्तमाने वाङ्मात्रेणाथवा विहिताः॥ १२९॥

किं ब्रवीषि—'नन्विदानीं कः प्रतिबन्धः' इति। भद्रे, अस्ति प्रतिबन्धः, यदसत्प्रिया स्वयंविरचिताभ्यवहारसाधनसामग्री मदभ्यवहारानन्तरमेवाभ्यवहर्तुकामा मदागमनं प्रतीक्षते। किं ब्रवीषि—'आर्य, भवता मम भवनमासाद्य क्षणमात्रमपि स्थित्वा ताम्बूलचर्वणसुखमपि वानुभूय गन्तव्यम्' इति। (स्वगतम्।) एतावन्मात्रमप्यस्या अभ्यर्थितमनुवर्तनीयमेव।

अन्यथा ह्यदाक्षिण्यमापत्स्यते । (प्रकाशम् ।) भद्रे, यदभिरुचितं भवत्यै । (इत्यन्तःप्रवेशं नाटयित्वा ।) अये, इयं द्रुतगतिरन्तःपुरं प्रविश्य ताम्बूलपेटिकां तृणकटं चादाय झटित्येव बाह्यालिन्दतलमुपतिष्ठते । किं ब्रवीषि—'इतो भवानिमं तृणकटमलंकुरुताम्' इति । (उपविश्य ।) भवत्यप्युपविशतु । किं ब्रवीषि—'इयमुपविशामि' इति । भद्रे, अनुचितमेतत्, यदस्मदर्थमपि भवत्यैव वीटिका विरच्यते । किं ब्रवीषि—'आर्य, यत्प्रणयिनि क्रियते तद्भवत्यप्यनुष्ठेयमिति मदीयः संकल्पः' इति । (सस्मितम् ।) भद्रे, तर्हि कृतार्थोऽस्मि । किं ब्रवीषि—'आर्य, प्रतिगृह्यतामियं वीटिका' इति । देहि । (इति हस्तं प्रसार्य ।) किं ब्रवीषि—'मुखं व्यादेहि' इति । (सस्मितम् ।)

व्यादास्यामि मुखं भद्रे यद्देयं तच्च दास्यसि ।
इदानीमीदृगेवास्तु कर्तव्यमखिलं पुनः ॥ १३० ॥

(इति हस्तेनैव ताम्बूलग्रहणं नाटयित्वा ।)

अमृतकिरणलेखारूपमूर्ते भवत्याः
सुमुखि करतलेन प्राप्तसंयोगमेतत् ।
अमृतमिव बिभर्ति स्वादुतामत्युदारां
दलमुरगलतायाः पूगचूर्णानुविद्धम् ॥ १३१ ॥

(ऊर्ध्वमवलोक्य ।) आसन्नो मध्याह्नः, वयं च गृहीतताम्बूलाः । तदिदानीं गमिष्यामः । किं ब्रवीषि—'कदा पुनर्द्रक्ष्यसि' इति । भद्रे, सायाह्नवेलायां पक्षे कर्तव्यशेषकरणायागमिष्यामः । यदि प्रियसुहृन्मन्दारकः सायाह्न एवागमिष्यति, तर्हि देव्युत्सववेलायां भवत्सविधमुपसारिष्यामः । किं ब्रवीषि—'आर्य, यद्यपि प्रियसुहृदागमने कर्तव्यशेषता नास्ति, तथापि प्रियसुहृद्दर्शनं वा तदागमननिर्णयो वा मदीयनयनाह्लादनमेव वा प्रयोजनं भविष्यति । तत्सर्वथापि सायाह्न एवागन्तव्यं भावेन' इति । (सहर्षम् ।) यदभिरुचितं भवत्यै । (इति प्रस्थितः । परिक्रम्य ।) अये, केयमग्रतो नातिदवीयसीं पदवीमाश्रित्य गच्छति । (विभाव्य ।) एषा कारीषगन्ध्या नाम मदनमञ्जर्याश्चेटी केनापि कार्येण संभ्रान्तेव सत्वरमदविन्यासा गच्छति । (विमृश्य ।) अनया मदनमञ्जर्या आधुनिकं वृत्तान्तं विज्ञास्यामि । (किंचिदुच्चैः ।)

हञ्जे, ससंभ्रमं कुत्र प्रस्थितासि । किं ब्रवीषि—'अहो किमार्यः । कार्यगौरवेण पार्श्वतः स्थितमप्यार्यमवीक्षितवत्यस्मि । यद्देवीवन्दनाय तदालयं गतामार्यां मदनमञ्जरीमानेतुं निजदयितेन वैदेशिकब्राह्मणेन नियुक्ताहं गच्छामि' इति । हञ्जे, किमिदानीं तस्य । किं ब्रवीषि—'आर्य, किं ब्रूमः केषांचिन्नर्मवचनश्रवणेन शुद्धहृदयस्य तस्य मनसि महान्संरम्भः संजातः' इति । (सवितर्कम् ।) हञ्जे, किं तैरुक्तम् । किं ब्रवीषि—

'न देवीवन्दनं कर्तुं प्रयाता भवतः प्रिया ।
कामदेवोत्सवं कर्तुं कामिना केनचित्सह ॥ १३२ ॥
यदस्माभिः पथि श्रान्ता दृष्टा सा श्लथकुन्तला ।
निदाघबिन्दुताराणां प्रयाता नाकतामिति ॥ १३३ ॥

एवं तैरुक्तम्' इति । (सविमर्शं स्वगतम् ।) आः, पुनः प्रणयकलहाकुलितमानसस्य नितान्तकोपनस्य तस्य समीपादपनेतुमशक्यतया तया सुकुमारलतया सुकुमारस्य मनीषितमसंपादनीयमेव । यतः ।

वृथापि दोषं दयितासु पश्यतां विलासिनां मानसमाविलं यदि ।
पुनः प्रसादं भजते तु संभुजिक्रियामवाप्यैव कदापि नान्यथा ॥ १३४ ॥

भवतु । तर्हि श्व एव संपादनीयम् । (प्रकाशम् ।) हञ्जे, पिशुनवचनप्रकोपितेन तेन तामानीय किं चिकीर्षितम् । किं ब्रवीषि—'इतः परमस्मत्सविधात्कदाचिदपि यथा नापयाति, तथा तां करिष्यामीति तदीया चिकीर्षा' इति । (सविषादम् । स्वगतम् ।) यद्येवं प्रतिश्रुतार्थः साधनीयो[1] न स्यात् । अथवा कृतं विषादेन । यद्दम्पत्योः कलहस्यास्थिरत्वेन तत्कृतापि व्यवस्था तथैव स्यात् । (प्रकाशम् ।) हञ्जे, कथमिव तथा करणं बन्धनेन वा सदैव तदनुवर्तनेन वा । किं ब्रवीषि—'नोभाभ्यामपि किंतु शपथकरणयैवेति मन्ये' इति । (सस्मितम् ।) अहो मूर्खता तस्य । यतो न जानाति वेशवनिताजनवृत्तान्तम् । यदेता

इष्टार्थसिद्धये पूर्वं कुर्वन्ति शपथान्बहून् ।
सिद्धे पुनर्विचेष्टन्ते विपरीतं हि योषितः ॥ १३५ ॥

१. 'प्रतिश्रुतार्थोऽसाधनीयो' क-ख.

भवतु । यथेष्टं साधयतु भवती । इदं किमपि मद्वचनं च तां श्रावय—'कस्यचिद्वृत्तान्तस्य विज्ञापनाय भवन्मन्दिरमपराह्णवेलायामागमिष्यामीति यन्मयाभिहितम्, कार्यान्तरगौरवेण तदन्यथाकरणे माभूदविश्वासः । सर्वथापि श्वस्तवालयमागमिष्यामि' इति । किं ब्रवीषि—'तथास्तु । साधयामि' इति । (विलोक्य ।) अये, गतेयम् । (ऊर्ध्वमवलोक्य ।) प्राप्तो मध्याह्नसमयः । तथा हि ।

आरूढ एव सविता गगनस्य मध्यं
नीराजमाननिजदीधितिदीपिताशः ।

(अधोऽवलोक्य ।)

आसन्नमम्बुजवनी दयितं विलोक्य
स्मेरं दधाति नलिनं वदनं प्रमोदात् ॥ १३६ ॥

अत्युष्णैरुष्णरश्मौ परिमृशति करैरङ्गमाशाङ्गनानां
दुष्प्रापाः स्युर्जनानामिति निजदयिता रक्षितुं जारवृत्तेः ।
भसीभूतैरिवासां तनुरुहनिकरैरातपैः कीर्यमाणा
छायाभिश्चार्धदग्धैरिव परिपतितैर्भाति भूमण्डलीयम् ॥ १३७ ॥

अपि च ।

पयोधिरिव पूरितो झलझलायमानैः करै-
र्जलैरिव दिशां ततिर्दुरवगाहतां गाहते ।
इयं च रविमण्डली वहति वाहवामेक्षणा
मुखज्वलनपिण्डतां भुवनमध्यबद्धस्थितिः ॥ १३८ ॥

अत्र हि समये

उष्णांशोरुपतापिताः करगणैरुष्णालुतां बिभ्रतः
पान्था मूलमुपाश्रिताः क्षितिरुहां श्रान्ता भृशं शेरते ।
अप्युड्डीनगतिं विहाय विहगास्तिष्ठन्ति शाखान्तरे
छायास्वेव निषद्य मीलितदृशो रोमन्थयन्ते मृगाः ॥ १३९ ॥

अपि च ।

धन्याः केचन काल्य एव विहितस्नानादिकाः सादरं
निर्वर्त्य प्रियया सहैव सरसामाहारलीलामपि ।

स्निग्धे वेश्मनि शीतले हिमपयःसेकात्सुधाकोमले
संविष्टाः क्षपयन्ति नर्मवचनैर्मध्याह्नवेलामिमाम् ॥ १४० ॥

तदहमपि प्रियामन्दिरमुपगत्य भोजनादिकं निर्वर्त्य दुःसहामिमामातपवेलां क्षपयिष्ये । (इति परिक्रम्य ।) अये, प्राप्तोऽस्मि प्रियामन्दिरम् । यावदन्तः प्रविशामि । (इति प्रवेशं नाटयित्वा ।)

प्रतीक्षमाणा मामेव मत्प्रिया मञ्जुलानना ।
तिष्ठत्युपोषितैवैषा कुलस्त्री गृहिणं यथा ॥ १४१ ॥

(उपसृत्य ।) प्रिये, किमस्मदागमनमाशङ्कितवत्यसि यदतिक्रामत्यभ्यवहारकालः । किं ब्रवीषि—'आर्य, न खल्वनुभूतचरमेतत् । किं च ।

तटाकतीरोपवनेषु केषुचिद्विनोदनाय स्फुटशाखिशालिषु ।
चरन्नपि श्रान्तिमितःसरोजिनीमनाप्य हंसो न हि याति विश्रमम् ॥ १४२ ॥

इति । (सहर्षम् ।) प्रिये, सत्यमेतत् । इतःपरमविलम्बितमेव निर्वर्त्यतामभ्यवहारविधिः । (इत्युपविश्य नाट्येन सर्वं निर्वर्त्य ।) प्रिये, रमणीयतरैवेयमभ्यवहारक्रिया । यतः ।

पूर्णस्नेहं[1] भवत्या मन इव मदनालस्यकृद्[2]द्रात्रवन्ते
दन्तच्छद्वत्[3]सरागोदयमधुरसितं नेत्रवद्व्यञ्जनाढ्यम्[4] ।
सद्वार्ताकं[5] यथास्यं युगमिव कुचयोः सूपसक्तं[6] सुवृत्तं[7]
चूलीजालं तवेवोज्ज्वलदधिकमिदं[8] भोजनं भाति भद्रे ॥ १४३ ॥

किं ब्रवीषि—'आर्य, को नाम भवानिव श्लिष्टमभिधातुम्' इति । (सहर्षम् ।) इदानीं स्वच्छन्दनिवासयोग्यं विलासमन्दिरं प्रविशावः । (इति परिक्रम्य प्रवेशं नाटयित्वा ।)

कुन्दादिभिः सुरभिलैर्ऋतुजप्रसूनै-
रावासितं हिमपयःपरिषेकशीतम् ।

---

१. प्रीतिस्तैलादिश्च. २. मदनेनालस्यं मध्यनालस्यं च. ३. सरागोदया मधुरा सिता यस्मिन्; सरागोदयं मधु रसितं यस्मिन्. ४. विशिष्टाञ्जनेन व्यञ्जनैश्चाढ्यम्. ५. सती वार्ता यस्मिन्, सद्वृन्ताकं च. ६. संश्लिष्टं सूपेन सक्तं च. ७. सुवर्तुलं पर्पटसहितं च. ८. अधिकं शिरसि उज्ज्वलत्, दिव्यदधियुक्तं च.

एतद्विलाससदनं मदनद्विपस्य
गण्डप्रदेशदलनं प्रकटीकरोति ॥ १४४ ॥

प्रिये, सहैव मुहूर्तमत्रोपविशावः । किं ब्रवीषि—'किमत्र कालपरिच्छेदनं क्रियते' इति। प्रिये, इतोऽपि कार्यान्तरेण गन्तव्यमस्ति । तदप्यतिदुःसहामिमां मध्याह्नवेलामक्षपयता कुत्रापि गन्तुं न शक्यते। (इत्युपविश्य ।) किं ब्रवीषि—'किमितोऽपि गन्तुमुद्युङ्क्षे । साधु साधु। मम तु सर्वदा विरहावस्थैव नियतिकल्पिता' इति । प्रिये, मा स्म शोचः ।

जानाति किं न भवती रसिकेषु मुख्य-
मन्योपकारकरणे च सदा रतं माम् ।
लप्स्ये[1] यतः सुकृतमेव तदन्तरान्त-
रोत्पद्यते यदि सुखाय पुनर्वियोगः ॥ १४५ ॥

किं ब्रवीषि—'आर्य, नर्मणा प्रोक्तमिदम्, न तु शोकेन। जानामि ह्येवम्—'अत्यन्तपरिशीलनाद्विशिष्टवस्तुन्यपि क्रमेणावज्ञा भविष्यति । 'अङ्गणस्थिताया मल्लिकायाः सौरभ्यं नास्ति' इति जगत्प्रसिद्धिः, इति। (सहर्षम् ।) प्रिये, आनीयतां ताम्बूलपेटिका । किं ब्रवीषि—'इयमत्रैव स्थिता' इति । (हस्तेन पेटिकामुपनीयोद्धाट्य सस्मितम् ।) प्रिये, त्वयि स्थितायामनुचितो मम हस्तप्रयोगः । किं ब्रवीषि—'स्वैरमास्स्व, अहमेव करिष्यामि' इति। प्रिये, मत्प्रयोगादपि त्वत्प्रयोगस्यैव रसावहत्वम् । तथा ह्याप्तवचनम्—'भार्याहस्तेन ताम्बूलम्' इति। किं ब्रवीषि—'आर्य, न केवलं ताम्बूलविषयकमेव स्त्रीणां प्रयोगस्याधिकरसावहत्वम्' इति । (सहर्षम् ।) प्रिये, एतादृशस्य सुधासारस्यन्दिनो वचनस्याकरभूरिदं मुखमिति विकुरुते मे मानसम् । (इति हस्ताभ्यां तन्मुखं गृहीत्वा चुम्बननाटितकेन ।) किं ब्रवीषि—'किमेवमकालोचितमाचरसि। मुञ्च मुञ्च । इमां वीटिकां गृहाण' इति। (विमुच्य वीटिकाग्रहणं नाटयित्वा ।) प्रिये, त्वया प्रतिपादितेयं स्वतो मह्यं रोचमानापि वीटिका संप्रत्यरोचकाय भवति, यथा पीयूषपायिनः सद्य एव

---

१. 'लभ्ये' ख.

क्षीरपानम्। किं ब्रवीषि—'अहो भावस्य स्तुतिपाटवम्' इति। (अवधाय।) किं बहिः पादशब्द इव श्रूयते। किं ब्रवीषि—'आर्य, एष सुकुमारस्य प्रियवयस्यो मधुराक्षः समागच्छति' इति। (वलितग्रीवं पश्यन्।) सखे मधुराक्ष, इतस्तावत्। अवितर्कितसंभवेनात्र भवद्दर्शनेनाकालकालबलाहकविलोकनेन चातकस्येव चेतसो ममाभिनवो विकासः। किं ब्रवीषि—'यद्भवद्दर्शनं भवतश्च मयि मनः प्रीतिस्तदुभयमप्यभ्यर्थितमेव। यदाहुः—कार्यार्थिनामयत्नेनाभिगम्य दर्शनं तस्य स्वस्मिन्नुन्निद्रता च कार्यसिद्धेर्लक्षणम्' इति। सखे, किमु कुशली प्रियसखः सुकुमारः। किं ब्रवीषि—'इतो भविष्यति इति प्रतिभाति, यदनुयुङ्क्षे' इति। सखे, इदानीं कीदृशी तस्यावस्था। किं ब्रवीषि—'शृणु सखे,

संभाव्य स्वरसे मुहुः शशभृतश्चूर्णैः पुनः पङ्क्तितै-
रुन्नीतं मनसेव पङ्कजभुवा यस्या वपुर्भासते।
तामापीतवतो दृशा वरतनुं सख्युर्ममाभूद्रुजा
या सेयं प्रतिवासरं शशिकलेवोपैति वृद्धिं परम्॥ १४६॥

ततश्च।

संतापं दधतो नितान्तमधुना पाटीरशैलानिलः
शीतांशोः किरणाश्च शीतलमपि स्मेरं पयोजन्म च।
नैवाह्लादनहेतवो न न परं सोढुं न शक्यानि वा
तस्य प्रत्युत वर्धयन्ति सहसा संतापमुच्चैस्तराम्॥ १४७॥

इति। सखे, किमत्र प्रतिविधातव्यम्। किं ब्रवीषि—'सखे, बहुवारमभ्यर्थितेन भवता यत्तस्मै प्रतिश्रुतम्, तदेव' इति। सखे, तत्पुनः कालापेक्षितया नाद्यतनीं संतापवल्लीमुन्मूलयिष्यति। किं ब्रवीषि—'सखे, अद्य ह्यारब्धो देव्युत्सवः' इति। सत्यम्। तथाप्यवितर्कितः कोऽप्यन्तरायः समापतितः। किं ब्रवीषि—'कीदृशः सः' इति। सखे, शृणोतु भवान्।

प्रणयकलहं प्राप्तस्तिष्ठत्यसज्जनभाषित-
श्रवणकुपितो नाथस्तस्यामिति श्रुतमद्य नः।

तदपनयनं कर्तुं तस्यास्तदीयसमीपतः
सपदि हृदयं भोक्तुं वाग्भङ्गचैव प्रसाद्य न शक्यते॥ १४८ ॥

किं ब्रवीषि—'इतोऽपि विलम्बिनीमेव कार्यसिद्धिं कल्पयति निष्कृपो विधिः' इति। सखे, यावन्तं कालं सोढवान्प्रियसखो न तावानितः परं सोढव्यः। किं ब्रवीषि—'यद्यपि कदाचिदनुकूलो विधिर्भविष्यत्येव। तथापि निश्चिताद्यनकार्यसिद्धौ तस्मिन्नीदृशी दशा कथं प्रतिबोधनीया। यतः।

निश्चितकामितसिद्धेर्विहतिर्महतीं करोति मनसि रुजम्।
आश्रयमाशापाशं छेत्तुमसौ स्यात्कृतान्तकरवालः॥ १४९॥

इति सव्यथं मे मनः' इति। सखे, तदेवं प्रियसखं प्रतिबोधय—

'सोढव्यमेव कदनं मदनप्रयुक्त-
मद्यापि मद्वचनतो विनिमील्य नेत्रे।
श्वः सर्वथापि खलु जीवति चेज्जनोऽय-
मुन्मूलयिष्यति रुजं भवतः समूलम्॥ १९०॥

इति सकलयुवजनकामितार्थसाधनैकरसिको विटाधिपस्त्वां प्रतिबोधयति' इति। किं ब्रवीषि—'स्मर्तव्या वयम्' इति। कः संदेहः। न ह्यचेतना वयम्। किं ब्रवीषि—'नन्वहं साधयामि' इति। अये, गतोऽयम्। प्रिये, किं ब्रवीषि—'व्यभिचारशङ्काजनितरोषकषायितहृदयस्य तस्य समीपतः कथं सापनेतव्या। येन प्रतिश्रुतार्थं साधयिष्यसि' इति। प्रिये, किं न जानासि 'दम्पतिरोषो न चिरस्थायी' इति। किंच वचनजनिता व्यभिचारशङ्का वचनेनैव निवर्तनीया। किं ब्रवीषि—'युज्यते' इति। (बहिर्विलोक्य।) अये, अतीता मध्याह्नवेला। किं ब्रवीषि—'आर्य, इयन्तं कालमविश्रान्तमार्येण, तदिदानीं किंचिदत्र विश्राम्यताम्' इति। (सहर्षम्।)

विश्रान्तं बहुवारमत्र सुचिरं नो किंचिदेभिर्जनै-
स्त्वद्वक्त्रेन्दुविनिःसृतां मृदुवचोरूपां धयद्भिः सुधाम्।

१. 'वाग्भङ्गचैव' इति यद्यप्यादर्शयोरुपलभ्यते, तथापि छन्दोनुरोधेन 'वाचा' 'वाग्भिः' इत्युचितम्.

अद्य त्वर्थिनि मानसेऽपि सुहृदः कार्यात्समारभ्यते
सद्यो गन्तुमतो मनीषिणि मनो रोषाविलं मा कृथाः ॥१९१॥

किं ब्रवीषि—'यदभिरुचितमार्याय' इति । प्रिये, तर्हीदानीं प्रतिष्ठे सायं पुनर्देव्युत्सवावलोकनाय त्वामानेतुमागमिष्यामि । (इति प्रस्थितः । परिक्रम्य ।) इतः परमासायमात्मनः स्वस्थतामेव मन्ये । तदस्यां वेशवनिताजनपरिपूर्णायां वेशवीथिकायां संचरंस्तद्दर्शनसंलापादिकं चानुभवन्क्रमेण देव्यालयपरिसरं च प्राप्तस्तत्र समागतानां नानादेशीयवनिताजनानामप्यालोकनादिभिर्नयनसुखं नयामि। (इति परिक्रम्य पुरतो विलोक्य ।) अये, महापताकायाः पूर्द्वारमिदमालोक्यते ।

यत्र शुक्लानि पुष्पाणि विभ्राजन्ते दिने दिने ।
कीर्यमाणानि मनुजैरीर्यमाणानि वायुभिः ॥ १९२ ॥

अत्र प्रविशामि । (इति किंचिदुपसृत्य ।) अये, कोऽयमुत्तरीयपटान्तरितगलान्तकलेवरः स्वच्छन्दमलिन्दवेदिकायां शेते । (विभाव्य ।) अये, महाकेतुरयम् ।

यदीयमासाद्य सकृत्समागमं पुनर्न वाञ्छन्ति कदापि योषितः ।
महायशस्कत्ववदावदाह्वयामिमां भ्रमादाश्रयते च यन्मनः ॥ १९३ ॥

किमयं निद्रायते, आहोस्विच्छयानः किमपि ध्यायति, सर्वथाप्येनमुद्बोधयामि । न ह्यकालकृतनिद्राभङ्गे प्रत्यवायः । न हि चेश्वरविषया कामुकानां मनोवृत्तिः । (किंचिदुच्चैः कृतहस्ततालम् ।) सखे, उत्तिष्ठ उत्तिष्ठ । अये, नयनमुन्मील्य पश्यन्मामुत्तिष्ठत्ययम् । सखे, किं किमपि निद्रायितम् । किं ब्रवीषि—'परिश्रान्तः किमप्यशयिषि' इति । सखे, किमस्याः पूर्द्वारपरिसरमासाद्यान्तःप्रवेशमन्तरेण संतिष्ठसे । किं ब्रवीषि—'अन्तःप्रवेशमभिकाङ्क्षन्नेव चिरमत्रागत्य कृतप्रयत्नोऽपि तया नानुमतः पुनरत्रैव विषण्णो निषण्णोऽस्मि' इति । सखे, किमननुमतौ निमित्तम् । किं ब्रवीषि—'न जाने सैव प्रष्टव्या' इति। सखे, तर्ह्याहूयतां सा । किं ब्रवीषि—'मदाहूता नागमिष्यति। तद्भवतैवाहूयताम्' इति । (स्वगतम् ।) सत्यमाह महा-

केतुः। नहि मृदुतरबृंहितसमाहूतापि हरिणी करिणमुपसर्पति। (प्रकाशम्।) सखे, तर्ह्यहमेवाह्वयामि। (इत्युच्चैः।) अपि मन्मथमहाराजमहीमण्डलविजयस्तम्भशिखरविलसन्महापताके महापताके किमन्तः संनिहितासि। किं ब्रवीषि—'संनिहितैवास्मि' इति। सखि, इदानीं बहिरागम्यताम्। किं ब्रवीषि—'आर्य, इदानीं त्वागम्यत एव' इति। अये, बहिरागतेयम्। सखे, पश्य पश्य।

मन्दहासमृदुज्योत्स्ना सुन्दरास्येन्दुमण्डला।
स्पन्दमानकुचद्वन्द्वा मन्दमायाति सुन्दरी ॥ १५४ ॥

किं ब्रवीषि—'रमणीयमेतत्' इति। (तां प्रति।) सखि, अयं महाकेतुश्चिरमत्रागत्य तिष्ठति कुतोऽस्यान्तःप्रवेशं नानुमन्यसे। किं ब्रवीषि—'आर्य, कथमनुमन्ये।

बाधां करोति सुतरामयमङ्गनाना-
मन्तःप्रवेशित इति प्रथितोऽयमर्थः।
स्वाभाविकं तदिदमप्रतिकार्यमस्य
का जानती निजनिपीडनमुत्सहेत ॥ १५५ ॥'

इति। सखे महाकेतो, भवत एवायं दोषः। किं ब्रवीषि—'पुरा कृतः कोऽप्यविवेकः कष्टमद्यापि वधूनामविश्वासं जनयति' इति। सखे, कीदृशः सोऽविवेकः। किं ब्रवीषि—'शृणोतु भावः।

अन्विच्छत्यमृताप्लुतं कनकमृत्पङ्कं द्वितीये वय-
स्याश्रित्यैव कुलालतां कलशयोः स्रष्टाबुरोजन्मनोः।
न्यस्यन्ती पदमेककं मम हृदि न्यास्थत्पदे द्वे अपि
प्राप्ता नेत्रपथेन पूर्वमबला बालेन्दुमालाह्वया ॥ १५६ ॥
तत्संभोगमभीप्सता बहुदिनं संप्रार्थितायामपि
प्रस्वां हन्त मया निराकृतिकृतिसारीं दशामष्टमीम्।
प्राहेनैव दृढावमर्दनभवत्पीडां गृहीत्वा बला-
दाकृष्टा विजने कदाचिदविवेकोऽयं बतानुष्ठितः ॥ १५७ ॥'

इति। सखे, यद्येवमप्रतिकारोऽयं व्याधिः। यतः।

वधूषु बालासु विहाय मार्दवं य आचरेत्साहसमक्षमः पुमान्।
न ताः स्त्रियः केवलमावयोलयं श्रुतं समस्ताश्च न विश्वसन्ति तम्॥१९८॥

किं ब्रवीषि—'भवताप्यदृष्टचिकित्सितेऽस्मिन्व्याधावदृष्टवैभवमन्तरेण भिषगन्तरं नान्वेषणीयमस्ति' इति। सखे, सम्यगेव पश्यसि किमिदानीमसाध्यकार्यचिन्तया उत्सवारम्भकौतूहलसमागतविविधजनविविधव्यापारविशेषरमणीयं देव्यालयं प्रतिगच्छावः। किं ब्रवीषि—'पुरस्ताद्गच्छतु भवान्। अहं त्वस्या जननीं दृष्ट्वानुपदमेवागमिष्यामि' इति। (स्वगतम्।) एष मन्ये धनलुब्धां जननीं धनदानेन संतोष्य तच्छासनबलेन वशं नीतामेनां संबुभुक्षतीति। (प्रकाशम्।) सखे, तर्ह्यहं गच्छामि। महापताके, किं ब्रवीषि—'अन्तर्गत्वास्मदीयां सत्कृतिमनादाय सद्यो गमनं वैमनस्यावहम्' इति।

संपूर्णेन्दुप्रभास्ये सुरभिलचिकुरे मञ्जुवाणि त्वदीया-
त्सांनिध्यादेव पञ्चस्वतिमुदितमभूदिन्द्रियेषु त्रयं नः।
सत्कारोऽर्धाधिकोऽतः समजनि गणितन्यायतस्त्वेष पूर्णः
स्वीकर्तव्योऽधुना यन्नय इह परिशिष्टस्य न ह्येष कालः॥१९९॥

तदिदानीमेतावदेवालम्। किं ब्रवीषि—'यदभिलषितमार्यस्य' इति। भद्रे, साधयामि। (इति परिक्रम्यावलोक्य।) अये, महापताकाया जननीयं समागच्छति। भद्रे, एतावन्तं कालं कुत्र गतासि। किं ब्रवीषि—'आर्य, प्रतिवेशिनीं शृङ्गारलतां द्रष्टुं तद्गृहं गतास्मि' इति। भद्रे, सा किं तत्र संनिहिता। किं ब्रवीषि—'अथ किम्' इति। भद्रे, भवतीं दिदृक्षमाणो महाकेतुर्महापताकयाननुमतान्तःप्रवेशश्चिरं बाह्यालिन्दमधितिष्ठति। किं ब्रवीषि—'आर्य, विज्ञातस्तदाशयः' इति। भद्रे, किं श्रोतव्यः। किं ब्रवीषि—'आर्य, कः संदेहः। भवते निवेद्य तद्विषयकं किमपि विचारणीयमिति मनीषितमस्ति' इति। भद्रे, तर्हि श्रावय। किं ब्रवीषि—'एष महाकेतुर्महापताकया सह रतिलाभलोलुभः' इति। (सस्मितम्।) भद्रे, युज्यते

एतत् । किं ब्रवीषि—'आर्य, मास्तु परिहासः, श्रोतव्यशेषः श्रूयताम्' इति। अवहितोऽस्मि। किं ब्रवीषि—'चिराय मामभ्यर्थितवान्' इति । ततस्ततः । किं ब्रवीषि—'ततश्च सकलयुवतिजनविदितयथार्थनामताजनितभीरुतासहकृतपुत्रिकावात्सल्यनिरुद्धदाक्षिण्यया मया निराकृतश्च' इति। ततस्ततः । किं ब्रवीषि—'ततश्च

विहाय प्रथमोपायं द्वितीयोपायमाश्रितः ।
सिसाधयिषते वाञ्छां द्वित्रेष्वेषु दिनेषु सः ॥ १६० ॥

इति । भद्रे, किमिदानीमनुमतिस्तव जाता । किं ब्रवीषि—'नहिं नहिं प्रतिपत्तिमूढमेव मे संप्रति चेतः । यतः ।

लाभो धनस्य भवितेति विचारकाले
कर्तव्यमिष्टमदसीयमिति प्रतीतिः ।
पुत्री कथं नु भवितेति पुनर्विचारे
नो सर्वथापि करणीयमिति प्रतीतिः ॥ १६१ ॥

तत्किमत्र कर्तव्यमिति प्रतिपत्तिमूढता भावेनैव छेदनीया' इति। (स्वगतम् ।)

वित्तार्जनोपनिषदध्ययनव्रताना-
मेतादृशां मृगदृशामपतिव्रतानाम् ।
पथ्योपदेशविधिरप्रियतैककारी
याः सर्वथाप्युपनतं न धनं त्यजन्ति ॥ १६२ ॥

तदस्याः प्रियमेव भणामि । (प्रकाशम् ।) भद्रे, सर्वथापि स्वयमुपनतं द्रविणं नोपेक्षणीयम् । तन्निमित्तो यदि प्रत्यवायः स तेनैव वारणीयः । किं ब्रवीषि—'आर्य, एवमेतत्' इति । तर्हि साधयतु भवती । वयं च साधयामः । अये, गतैषा । एषा हि

पृष्ठे पतन्तं चिकुरस्य भारं लसत्प्रसूनावलिलोभनीयम् ।
सतारमाकाशमिवोद्वहन्ती वृद्धापि वृद्धिं कुरुते सरस्य ॥ १६३ ॥

(परिक्रम्यावलोक्य ।) अये, शृङ्गारलताया मन्दिरमिदमालोक्यते । अत्रान्तः प्रविशामि । (इति प्रवेशं नाटयित्वा ।) हन्त, शृङ्गारलतेयं तुङ्गारवेगेयं जनित-

मीनकेतनप्रसादं निजनिकेतनप्रासादमधिरुह्य गवाक्षेण वीक्षमाणा तिष्ठति। इयं हि

अरुणाधरपल्लवमध्यलसत्स्मितपुष्परुचिस्तनभारफला।
पुरसौधगिरीन्द्रकृतस्थितिका निजनाम यथार्थयते वनिता॥ १६४॥

अपि च।

एषा शृङ्गारलता दोषाकरकान्तिचोरचारुमुखी।
वेषादतिरमणीया केषां न करोति चेतसि प्रमदम्॥ १६५॥

(उपसृत्य।) किं ब्रवीषि—'आर्य, इदं सौधाग्रमारुह्यताम्' इति। अयमारोहयामि। (इत्यारुह्य।)

महासुन्दरि सौन्दर्यनिर्धूतकमलालये।
अद्य नः सुदिनं जातं यत्प्राप्तासि पदं दृशोः॥ १६६॥

किं ब्रवीषि—'अयं तृणकटस्तावदलंक्रियताम्' इति। (उपविश्य।) महासुन्दरि, अधिष्ठितेनामुना ममैव महती शोभा जायते। अस्य तु त्वदधिष्ठानमेवालंकरणम्। पश्य।

गुञ्जाफलं न खलु काञ्चनमध्यलग्नं
तस्यातनोति पुनरात्मन एव शोभाम्।
तस्य श्रियं वितनुते यदि पद्मरागः
शोभाममुष्य च करोत्युचिताधिवासः॥ १६७॥

तद्भवत्याप्युपविश्यताम्। किं ब्रवीषि—'त्वदधिष्ठानमेवालंकरणम्' इति वचनं सारस्य वैदग्धीमहार्णवस्य भवतः स्तुतिरूपमिति जानत्यापि मया भवदाज्ञाया अकरणमरसावहमिति रसिकाग्रेसरभवत्समीपोपवेशलोलुपतयोपविश्यते' इति। अये, उपविष्टेयम्। महासुन्दर्यपि कुशलं भवत्याः। किं ब्रवीषि—'इदानीं भवद्दर्शनेन' इति। (सस्मितम्।) कथं तद्भागधेयमस्मानुपतिष्ठते। यत्तावेवानुभवतः। किं ब्रवीषि—'आर्य, ताविति कावेतौ निर्दिष्टौ' इति। शृणु महासुन्दरि,

उद्वाहपर्वणि पुराकृतवस्त्रदानः
शृङ्गारसार इति यः प्रथितः पतिस्ते।

यश्चापरः सुमुखि सुन्दरदत्तनामा
गूढः प्रियो भवति ताविति तौ प्रदिष्टौ ॥ १६८ ॥

किं ब्रवीषि—'आर्य, द्वितीयवाक्यार्थस्तावद्गगनकुसुमशशशृङ्गयोः समधुरामालम्बते' इति। महासुन्दरि, न खलु पतिस्ते, पतिमित्रं वायं जनः। अथवा स्वभावोऽयमङ्गनानाम्। किं ब्रवीषि—'आस्तामिदं नर्मवचनम्। ताम्बूलदानादिभिरातिथ्यं भवते चिकीर्षामि' इति। (सस्मितम्।) सर्वत्र सुलभतयानभिलषितस्य वस्तुनः प्रतिपादनमनतिप्रीतिकरम्। किं ब्रवीषि—'तर्हि किमत्र भवतोऽभिलषितम्' इति। महासुन्दरि, शृणु। कथयाम्यभिलषितम्।

[1]अदेङ्[2]संज्ञाभिरन्यूनां दृष्ट्वा सर्वा[3]ङ्गपोत्तमाम्।
आदैचोराश्रयन्[4]संज्ञां कामः पीडयते भृशम् ॥ १६९ ॥

किं च।

दृष्ट्वा त्वदीयकुचकाञ्चनकुम्भडिम्भौ
स्प्रष्टुं मुहुः स्पृहयतो मम हस्तपद्मौ।
शङ्काकुलेन मनसा प्रतिषिद्धवेगा-
वाधोरणेन करिणाविव सीदतश्च ॥ १७० ॥

किं च।

लक्ष्म्या लक्ष्मीसमत्वं तव वदति जनः स्पर्धया तत्सुतस्त-
न्नित्यावासं भवत्याः सुमुखि मम मनःपुण्डरीकप्रकाण्डम्।
दग्धुं मुग्धे व्यवस्यत्यनिलसखमुखैराशुगैराशु गूढं
तद्दत्त्वा दन्तवासःस्रवदमृतरसानाश्रयो रक्षणीयः ॥ १७१ ॥

अपि च।

स्वर्णपङ्कजसमानमाननं कर्णिकेव नवपद्मरागजा।
यो विभूषयति पातुमिष्यते सोऽधरस्तव सुधासहोदरः ॥ १७२ ॥

किं ब्रवीषि—

'विगण्यमाने प्रियनिर्विशेषं त्वय्यागते चेतसि मे प्रहृष्टे।
कथं विशङ्काकुलमन्तरङ्गमासीत्तवेति व्यथते मनो मे ॥ १७३ ॥'

---

१. अयं श्लोकः क-पुस्तके त्रुटितः. २. गुणैः. ३. भवतीम्. ४. वृद्धिम्.

इति । महासुन्दरि, यद्येवं तर्हि धन्योऽस्मि । किं ब्रवीषि—'आर्य, कः संदेहः ।

रूपं ते नयनामृतं मृगदृशां विद्या च हृद्या परं
शीलं चाखिललोकरञ्जनकरं जातिश्च मान्या जनैः ।
दारिद्र्यस्य च लोभनस्य च दिवः पुष्पेण तुल्या दशा
को धन्यः क्षितिमण्डले विजयते त्वत्तः परः पूरुषः ॥ १७४ ॥'

इति । महासुन्दरि, ईदृशं सर्वेन्द्रियतृप्तिसाधनसमस्याभूतं वचनं त्वन्मुखचन्द्रादन्यतः कुतो निर्गच्छति । किं ब्रवीषि—'इदमप्यवधेहि ।

अधीनं भवतो नित्यं मदीयं सकलं वपुः ।
कामितानि यथाकामं तूर्णं पूर्णयतां भवान् ॥ १७५ ॥'

इति । (सहर्षम् ।) महासुन्दरि, एवमप्यकालतयेदानीं त्वदालिङ्गनचुम्बनादिषु सत्वरमपि निवर्तयामि मानसम् । भवतु समयप्राप्तौ सर्वम् । किं ब्रवीषि—'यथाभिलषितमार्यस्य' इति । महासुन्दरि, तर्हीदानीं गमिष्यामि । पुनर्देव्युत्सवावसरे द्रक्ष्यामि । किं ब्रवीषि—'इदं ताम्बूलमप्यादीयताम् । अविस्मरणाय भवतु' इति । महासुन्दरि, हृदयलग्नं त्वद्वचनमेवाविस्मरणाय भविष्यति । इदं पुनस्त्वत्करसंसर्गसंपादितमाधुर्यमित्यादीयते । (इति ताम्बूलग्रहणं नाटयित्वा ।) महासुन्दरि, साधयामि । (इति परिक्रम्यावरोहनाटितकेन ।) अये, शृङ्गारलतायाः सोदरी विस्मयलता नाम बालवनितेयं सौधस्थलमारोहति । अयि विस्मयलते, एकयानयोग्येऽस्मिन्निःश्रेणिकामार्गे द्वयोः प्रतिकूलगमनं दुष्करम् । अतः पश्चादेव द्वित्राणि पदानि गम्यतां भवत्या । किं ब्रवीषि—'आर्य, न खलु न्यस्तं पदमाक्रष्टुमुत्सहे । कथमपि गमनं भविष्यति' इति । अये, इयं मुखस्पृष्टजङ्घाप्रदेशा संवृत्ता । अयि सुन्दरि, इतः परमारोहसि चेत्कुत्र ते मुखारविन्दं भविष्यति । किं ब्रवीषि—'आर्य, यत्र कुत्रापि भवतु नाम । नहि भवदङ्गेषु किंचिदपि जुगुप्सनीयमस्ति' इति । अये, इयमतिसारस्यनिलया तत्तदङ्गेषु जिघ्रन्ती शनैरारोहति किमिदानीं मयैवोदास्यते । (इति मुखस्पृष्टमुखीं गाढमालिङ्ग्य ।) सुन्दरि, अवितर्कितोपानतेनानेन समागमेनामृतलहरीसमाप्लुतमिवात्मानं बिभर्मि । (इत्याचुम्ब्याधरपानं नाटयित्वा ।)

मृद्वीकां कदलीफलं मधुरसं क्षीरं गुडं शर्करा-
मप्येकत्र निधाय चन्द्रकलशे पीयूषयूषैर्भृते ।
सिद्धः कोऽपि तवाधरद्वयमयः पीतः कषायो मया
सत्यं सुन्दरि नैव शाम्यति पुनः कामामयो वर्धते ॥ १७६ ॥

किं ब्रवीषि—'सर्वं शमयिष्याम्यवसरप्राप्तौ । इदानीं गन्तुं विसृज । यः कोऽपि न पश्यतु' इति । (विसृज्य । वैमनस्यं नाटयित्वा ।) हन्त, समारुह्य गतैवेयम् । (वलितकन्धरमूर्ध्वमवलोक्य ।)

पृष्ठावलम्बिगतिभेदचलत्कचाली-
मेघान्तरस्फुटितगात्रलतातडिद्भिः ।
अन्तर्मदं जनयते मम हृन्मयूर-
स्त्रीपुंसयोरतितरामियमेव वर्षा ॥ १७७ ॥

अपि च ।

वदनं परिवर्त्य वीक्षमाणा शरदिन्दूदयसुन्दरं कृशाङ्गी ।
क्षणकालमनन्तरर्तुशोभां दधती हन्त तिरोहिता च सद्यः ॥ १७८ ॥

इतः परं किमत्रावस्थानेन । (इति परिशेषमवरोहं नाटयित्वा परिक्रम्यावलोक्य ।)

स्रस्तालम्बितसृक्कभागविगलत्ताम्बूलपूगद्रव-
स्रोतःस्नातनितान्तरक्तचिबुको निर्दन्तनिम्नाधरः ।
वृद्धः कश्च न सर्वगात्रपलितः पाणौ धृते दण्डके
विन्यस्तात्मभरः शनैश्चरपदं नम्रः समागच्छति ॥ १७९ ॥

अहो, 'मधुररसास्वादनानन्तरमम्लरसोऽपि मनागास्वादनीयः' इति वृद्धोक्तेरनुरूपमेव संजातम् । यदेतावन्तं कालं तादृशं सुखमनुभूयेदानीमीदृशमसुखमप्यनुभूयते । भवतु । एनमनापृच्छ्यैव गच्छामि । (इति परिक्रम्य ।) इदं बालचकोरप्रियतमाया बालचन्द्रिकायाः पुरबहिर्द्वारमालोक्यते । तत्र गत्वा तद्वृत्तान्तं ज्ञास्यामि । (इति तत्र गतः) अये, बालचन्द्रिकेयमुद्याननिकुञ्जनिलयान्निर्गत्य ससंभ्रमं मामदृष्टवतीव गच्छति । (विभाव्य ।) इयं केनापि रसिकेन निकुञ्जोदरनिलीनेन सद्यो भुक्तमुक्तेव प्रतिभाति । तथा ह्यस्याः

स्विन्नं कपोलयुगलं शिथिलाश्च केशा
वक्षोजयोरपि सवेपथुता न शान्ता ।
ताम्बूलपूगरसहीनतयोज्ज्वलात्मा
नैसर्गिकं प्रकटयत्यधरश्च वर्णम् ॥ १८० ॥

तदस्याः प्रकटयिष्याम्येतादृशं व्यापारम्। (इत्युपसृत्य ।) अयि बालचन्द्रिके, किं मामदृष्टवतीव गच्छसि । किं ब्रवीषि—'किमार्यः । देव्युत्सवावलोकनोचितवेषविरचनार्थकपुष्पापचायक्रियाजनितपरिश्रमेण तदुत्पादनकौतूहलातिरेकसंजातसंभ्रमेण च विवशीकृतमानसा भवन्तं न दृष्टवत्यस्मि' इति, (विहस्य ।) अहो ते वञ्चनाचातुरी । किं ब्रवीषि—'आर्य, न खलु वञ्चनागिरं भणामि । किं तु परमार्थमेव' इति । (सस्मितम् ।)

गण्डे स्वेदलवः कुचाग्रललनं केशेषु विभ्रष्टता
निश्वासश्च निरन्तरो भवतु ते पुष्पापचायश्रमात् ।
धौतस्येव तवाधरस्य विगतम्लानेरतीवोज्ज्वलं
शोणत्वं खलु वक्ति मन्मथकलां केनापि यूना सह ॥ १८१ ॥

(स्वगतम् ।) अये, इयं स वैलक्ष्यस्मितं किमपि मां विवक्षति । (प्रकाशम् ।) भद्रे, आकारकथितस्य वस्तुनः पुनरनुकरणमेष ते वैलक्ष्यस्मयः करोति । किं ब्रवीषि—'उपांशु भण्यतामन्तःस्थिताः श्रोष्यन्ति' इति ।

यं मां वञ्चयितुं या त्वं स्निग्धं मुग्धे व्यवस्यति ।
सोऽहं तस्यास्तव हितं चिकीर्षामि कथं पुनः ॥ १८२ ॥

किं ब्रवीषि—'आर्य, मा मैवम् । न मया भवदतिसंधानचिकीर्षया तादृशं वचनमभ्यधायि । किं तु बालतया प्रयुक्तया व्रीडया' इति। भद्रे, वेशवनिताभिः कुतोऽपि न व्रीडितव्यं किं पुनरसक्तः । किं ब्रवीषि—'एवमेवैतत्' इति। भद्रे, तर्हि कथय परमार्थम् । किं ब्रवीषि—'यद्भवाननुमिनोति तदेव तत्त्वम्' इति । भद्रे, अत्र किमपि प्रष्टव्यमस्ति । किं ब्रवीषि—'पृच्छ्यताम्' इति ।

गाढाश्लेषनिपीडितस्तनभरं निष्पीतबिम्बाधरं
वक्त्रोपान्तविशीर्णकुन्तलचयं नृत्यन्नितम्बद्वयम् ।

उद्यत्कोमलकाकलीकमणितं सद्यः कृतं सांप्रतं
कस्ते सुन्दरि पूरुषायितरतं धन्यः पुमानन्वभूत् ॥ १८३ ॥

किं ब्रवीषि—'स एव सरसकेतुः' इति। भद्रे, स कथमद्यापि न मुच्यते।

पतिस्ते श्रुत्वा यं निभृतमुपभोक्तारमसहः
कदाचित्त्वत्केलीशयनमुपयातं विदितवान् ।
जवादभ्यागत्य प्रसभमुपसंयम्य विविधैः
प्रहारैरासन्नव्यसुतमकृतेति श्रुतमभूत् ॥ १८४ ॥

किं ब्रवीषि—

'अपूर्वका(?)संगतिरादिमावयोर्न कालवेगौ भ्रमितिश्च भिद्यते ।
प्रवृत्तयश्चान्वहमप्रकाशिताः स मुच्यते मुञ्चति वा कथं प्रियः ॥ १८५॥

किं च।

दैवानुकूल्यविरहाध्यसनं जनानां
जायेत जातु यदि जातु पुनः सुखं च ।
वर्षास्वदृष्टशशिनामिव कैरवाणा-
मेतावता प्रणयिनोर्न भवत्युपेक्षा ॥ १८६ ॥'

इति । भद्रे, भवत्वेवम् । कुत्र पुनरिदानीं स वर्तते । किं ब्रवीषि—'मया सह मन्मथकेलिमनुभूय प्रयातुकामो भवन्तमवलोक्य पुनर्निकुञ्ज एव निलीनस्तिष्ठति' इति । भद्रे, स मत्तो न बिभेतु । तदत्राहूयताम् । किं ब्रवीषि—'आर्य, मास्तु तदाह्वानम् । अन्तर्वर्तते बालचकोरः । स यथाकथंचिदपि विजानीयात्' इति । भद्रे, किमन्तर्वर्तते बालचकोरः । किं ब्रवीषि—'अथ किम्' इति । भद्रे, कथं पुनर्निजभर्तारं परित्यज्य तत्सविधं गतासि । किं ब्रवीषि—

'पुष्पापचायस्य मिषादिदानीमुत्पाद्य तस्यानुमतिं कथंचित् ।
तत्पादविन्यासनितान्तधन्यमुद्यानवल्लीगृहमागतास्मि ॥ १८७ ॥'

इति । (स्वगतम् ।) अहो वेशवनितानामीदृशो व्यापारः । यदेता

इष्टं दातुमसंदिहानमखिलं विश्रम्भभाजं निजं
भर्तारं प्रति वञ्चनामनुदिनं तत्तादृशैः कैतवैः ।

कर्तुं निर्दयमन्यकेन रमितुं निर्व्याजवद्वर्तितुं
चाबाल्यादिव शीलिता मृगदृशः पाटव्यमाबिभ्रति ॥ १८८ ॥

तदेतासु कदाचिदपि न विश्वसनीयं पुरुषेण । (प्रकाशम् ।) भद्रे, समीचीनस्तवोपायः । (सस्मितम् ।) मयापि त्वदीयगात्रलतासौकुमार्यमधरामृतमाधुर्यं चास्वादितुकामेन बहुकृत्वोऽभ्यर्थयमानेन भवत्या निरपराधमेव निराकृतेन संप्रति स्वाभीष्टसाधनोपायो दृष्टः । किं ब्रवीषि—'कः सः' इति । भद्रे, अन्तः प्रविश्य तत्रावस्थिताय बालचकोराय त्वदीयमीदृशं व्यापारं निवेदयिष्यामि । ततश्च तेन परित्यक्ता पुनर्मद्वचनानुवर्तिनी भविष्यति । किं ब्रवीषि—'आर्य, त्वद्विधेयेऽस्मिञ्जने किमीदृशव्यापारेण' इति । भद्रे, वचनस्यैव ते विधेयता दृश्यते, न तु क्रियायाम् । किं ब्रवीषि—

'इतः परं मे भविता न तादृशं वृथैव ते मास्तु हृदि व्यथोदयः ।
विलोचनेनैव शपे स यौवनं मम त्वदायत्तमिदं कलेवरम् ॥ १८९ ॥'

इति । (सहर्षम् ।) भद्रे, भवत्वेवम् । संप्रति साधयामि । पुनर्देव्युत्सवावसरे द्रक्ष्यामि । (इति परिक्रम्य ।) कोऽयं शब्दः श्रूयते । (अवधार्य ।) अये, मर्दलशब्दोऽयं सकांस्यशब्दमुज्जृम्भते । (विचार्य ।) देव्यालये तौर्यत्रिकारम्भेण भवितव्यम् । सर्वथापि तत्रैव गच्छामि । (इति परिक्रम्यावलोक्य च ।) अये, तौर्यत्रिकदर्शनार्थमेताः काश्चन योषितः परिजृम्भमाणमर्दलनिस्वननिशमनतरलीकृतमानसाः ससंभ्रमं गच्छन्ति । तदेताभिः सह संभाषमाणो मार्गशेषं लङ्घयामि। (इत्युपसृत्य ।) भो भो योषाजनभूषारत्नानि, यूयं कस्य देशस्यालंकरणाय प्रयाथ । (स्वगतम् ।) अये एता देशान्तरीयत्वेनापरिचिता अननुभूतस्वराकर्णनशङ्कितमानसतयोत्तरमददानाः परिवृत्य पश्यन्ति । तदेवं भणामि । (स्मितं कृत्वा । प्रकाशम् ।) मा शङ्किध्वं सुन्दर्यः । न खल्वयं जनो मूर्खजनेष्वन्यतमः, किं त्वत्रत्यवेशवनिताजनविस्रम्भसर्वस्वभाजनं रसिकाग्रेसरः पल्लवकः । इदानीं तु

आलोक्य लोकोत्तरमीदृशं वो रूपं श्रिया निर्धुतजातरूपम् ।
कौतूहलालिङ्गितमानसत्वादशङ्कमेवंविधमाचरामि ॥ १९० ॥

किं ब्रूथ—'अविदितभवन्माहात्म्यतयास्माभिरनादृतोऽसि, न खल्वदाक्षिण्येनेति मन्तव्यमार्येण' इति ।

आकृतिगुणयोर्व्याप्तौ शास्त्रोक्तायां विशङ्कते कतमः ।
दाक्षिण्यगुणाभावं युष्मासु नितान्तशोभनाकृतिषु ॥ १९१ ॥

इदानीमपि मद्वचनस्योत्तरं धारयथ । किं ब्रूथ—'सरसमर्दलनिःस्वनजनितकौतूहला देव्यालयं प्रति गच्छामः' इति । हे सुन्दर्यः, अहमपि तथाभूतः। तद्युष्माकं किंचित्कालमनुचरो भवामि । किं ब्रूथ—'आर्य, अनुचितमेतत् । यतो नार्यो नार्यनुचरो भवितुं योग्यः । नार्यः पुनर्नायकानुचर्य एव शोभावत्यः' इति । हे सुन्दर्यः, तथापि देशान्तरीयतया यूयमस्माभिः पुरस्कर्तव्या एव । किं ब्रूथ—'तर्हि सहैव गच्छामः' इति । (सहर्षम् ।) हे सुन्दर्यः, प्रियं मे । यतः ।

मुखेन्दोः सौन्दर्यं कुचकलशयोर्वा सुभगतां
पुरस्तात्पश्चात्तु श्रियमसितकेशावलिगताम् ।
न पश्येयं गत्यामभिमतमतो वः सह खलु
प्रयाणं यत्र स्यादपि सुलभमङ्गाङ्गमिलनम् ॥ १९२ ॥

(इति सहगमनं नाटयन् ।) हे सुन्दर्यः, इदानीं तु

देशस्य कस्य वदनस्य महीतरुण्याः
सिन्दूरबिन्दुसुषमां दधते भवत्यः ।
इत्युत्सुकत्वमपि साधुसुधानिमग्नं
चित्तं विदूषयति चन्द्रमिवैणशावः ॥ १९३ ॥

किं ब्रूथ—'आर्य, मास्तु भवतश्चित्तदूषणम् । इदं तावद्विजानीहि—

मध्येकेरलमिद्धसर्वविभवैः सद्धामभिर्मण्डितं
शुद्धान्तःकरणैर्ऋचां निपठने श्रद्धालुभिश्च द्विजैः ।
यद्धाम स्मरवैरिणः शिवपुरीत्यद्धा प्रसिद्धं गुणैः
स्पर्धालु त्रिदिवेन तत्परिसरे बद्धाधिवासा वयम् ॥ १९४ ॥'

इति । किं पुरहरपुरपरिसरविषयवासिन्यो भवत्यः । किं ब्रूथ—'अथ

किम्' इति। हे सुन्दर्यः, तर्हि नापराधो ममान्तःकरणवारणस्य युष्मदालोकनजनितमदेन धैर्यशृङ्खलामुच्छिन्दतः। यतः।

योषाणां तत्र जातानां विशेषः कोऽपि विद्यते।
गौरीकटाक्षपातेन जगन्मोहनकारिणा॥ १९५॥

किं ब्रूथ—'एवमेवैतत्। किं च यद्यस्मदालोकनेन भवतश्चित्तविकारो जातस्तर्हि भागधेयमप्यस्माकमुदजृम्भिष्ट। यतः।

ऋते विलासान्नियतेर्न लभ्यो भवादृशानां मनसि प्रमोदः।
रम्भादिसंभोगरसैकसारः संप्राप्यते ह्यल्पवृषैर्न लोकः॥ १९६॥'

इति। हे सुन्दर्यः, संनिहितमेव देव्याः पुरम्। इतः परं भवतीनामस्माकं च पृथगेव गमनमस्तु।

भर्तारो भवतीनां यदि पश्येयुः कथं नु विषहेरन्।
सुहृदोरपि तद्भावं हन्ति परोक्षप्रियावलोकाद्यम्॥ १९७॥

किं ब्रूथ—'भवत्वेवम्। इदमपरं किमपि याच्यते।

सौहार्दं यदि जातमत्र भवतश्चास्माकमन्योन्यतः
संलापप्रमुखक्रियाभिरधुना यादृच्छिकीभिः क्षणम्।
आस्माकी वसतिः कदापि भवता पूर्वाचलस्य श्रियं
नेतव्या निजतुङ्गशृङ्गवलभीखेलत्सुधादीधितेः॥ १९८॥'

इति। (सहर्षम्।) हे सुन्दर्यः, अस्माकमप्यभिलषितमेवैतत्। यतः।

सर्वेन्द्रियमहानन्दकन्दलीकन्दतां गतम्।
लिप्सते न हि कः स्वर्गमप्सरोभिरलंकृतम्॥ १९९॥

किं ब्रूथ—'यद्येवं तर्हि मेषगते पूषणि, फल्गुनीनक्षत्रगते चन्द्रमसि, अनेकदेवताविलासगमनपरिष्कृतस्तत्र यो महोत्सवः सकलजगत्प्रसिद्धस्तदालोकनार्थमागत्य द्वित्राणि दिनानि तत्रैव निवासः कर्तव्यो भावेन। एवं चास्मत्काङ्क्षितमपि सुसंपादनीयं भविष्यति' इति। हे सुन्दर्यः, भवत्वेवम्। इदानीं तु देहमात्रेण पृथग्भूय गच्छामः। किं ब्रूथ—'यदभिलषितमार्यस्य' इति। (परिक्रम्य।) अये, देव्याः पुरस्तात्तौर्यत्रिकमिदमारभ्यते। (उपसृत्य।) किंचित्कालमवलोकयामीति। (तथा कृत्वा।)

गाथां केरलभाषया विरचितां शृङ्गारहास्यादिभिः
पूर्णां पुण्यपुराणवर्णनमयीं गायन्नयं नर्तकः।
तालोज्जृम्भितमर्दलस्वनसमं नृत्यन्दृशोर्विभ्रमै-
र्भावव्यञ्जनकारिभिर्वितनुते प्रीतिं सभावासिनाम् ॥ २०० ॥

अहो रमणीयमेतत्। (अन्यतोऽवलोक्य।) अये, इहापि तौर्यत्रिकं वर्तते। अस्य तु गीतवादित्रादिभिः पूर्वसदृशत्वेऽपि विशेषः कोऽपि विद्यते।

वेण्वोर्युगेनोभयतो व्युदस्तामारुह्य मौर्वीमिह कण्ठदघ्नीम्।
आरभ्यते चारभटीनटेन पटीयसा निर्भयमत्र चित्रम् ॥ २०१ ॥

(मुहुः पश्यन्।) अये, दारवपादुकमधिष्ठाय ज्यामारोहयत्ययम्। आश्चर्यमाश्चर्यम्। अये, इदमितोऽपि महदाश्चर्यम्। यदेष

मध्येमौर्वि निधाय दारुरचितां पात्रीं तदीयोपरि
न्यस्यन्दारवपादुकोपरि गतौ पादौ निजौ लीलया।
चञ्चूर्तिं स्वयमञ्चितेन विधिना किंचिद्द्रुतं चान्तरा
चञ्चत्पादयुगेन चञ्चलयते मौर्वीमपि स्वाश्रयाम् ॥ २०२ ॥

अत्र सर्वत्र संचरन्क्रमेण सर्वमप्यालोकयामि। (इति परिक्रम्य।) अये, कश्चिदत्रेन्द्रजालविद्यां प्रयुङ्क्ते। एष हि

पिच्छालंकृतवेष्टनाञ्चितशिराः कूर्पासधारी वह-
न्वेत्रं कंचन पाणिना परिजनैः पार्श्वस्थितैः संयुतः।
उच्चैः कानिचिदक्षराणि विलपन्नव्यक्तमव्याजवं-
द्ध्यायन्भस्म किरन्करोति हृदयव्यामोहनं पश्यताम् ॥ २०३ ॥

अपि च।

उप्त्वा बीजमथाङ्कुरादि सहसा लोष्टादि धृत्वा करे
भस्मोद्धूलनमन्त्रजापविधिना सौवर्णखण्डादिकम्।
अभ्रादम्बुनिपातनादि च बहून्येवंविधान्यद्भुता-
न्यद्धा दर्शयते जनस्य जनयन्नानन्दमुच्चैस्तरम् ॥ २०४ ॥

अहो, अतिनिपुणोऽयमैन्द्रजालिकः। (अन्यतो गत्वावलोक्य।) अये, अत्र कैश्चित्पुरुषैः खड्गोत्क्षेपणविद्यारभ्यते। एते हि

श्रेणीभूय स्थिता रङ्गे कृपाणीः पाणिधारिताः।
उत्क्षिपन्ति च गृह्णन्ति नृत्यन्तश्च मुहुर्मुहुः॥ २०५॥

अपि च।

वादित्रे चित्तमेकं सपदि निजजनैरन्वगारभ्यमाणे
संगीते तद्वदन्यत्पुनरपरमसिक्षेपणादौ तथैव।
नृत्ते चान्यद्दधाना युगपदपगतश्रान्ति कुर्वन्ति विद्यां
नृभ्यो व्याख्यातुमन्तःकरणमिव चतुर्भेदवच्छास्त्रदृष्टम्॥ २०६॥

(सकौतुकं पश्यन्।) अहो, अमी बहुविधान्युत्क्षेपणानि विधाय पश्यतां मनसि प्रमोदमुत्पादयन्तः पुनरिदानीं तु

पुरस्तादुत्क्षिप्तं कमपि निपतन्तं विनिमया-
द्गृहीत्वा काभ्यांचित्करयुगधृताभ्यां क्रमवशात्।
त्रिभिः खड्गैरेवं नभसि करयोरप्यविरतं
कृतावासैः पुञ्जं पुर इव वितन्वन्ति तडिताम्॥ २०७॥

अये, कोऽप्येष महापुरुषः श्वेतोष्णीषमात्रकृतवेषः खड्गविद्यायामतिनिष्णातमतिर्महान्तं खड्गमुच्चैरुत्क्षिप्य निष्प्रयासं गृह्णाति। तथा ह्येष

उत्क्षिप्तां महतीं कृपाणलतिकां स्वं मार्गमासेदुषीं
विद्युद्भ्रान्तिमतेव जीवनभृता गाढं समालिङ्गिताम्।
भौमीयं न ममार्हतीति सहसा मुक्तामिव भ्रंशिनीं
भूयोऽप्युत्क्षिपति स्वयं वपुरिव त्रैशङ्कवं कौशिकः॥ २०८॥

चिरकालविद्याप्रयोगेण किमपि श्रान्त इव लक्ष्यते। तथा हि।

धाराकरालकरवालविभिद्यमान-
धाराधरोदरनिरर्गलपातुकानाम्।
वारां पृषद्भिरिव घर्मपयःपृषद्भि-
र्नीराजितं निटिलदेशमसौ बिभर्ति॥ २०९॥

अहो, अत्यद्भुतं किमप्याचरति।

उदरे निधाय पुरुषस्य कस्यचिन्नवनागवल्लिजदलानि कानिचित्।
शितधारखड्गलतया छिनत्त्यसावुदरं मनागपि यथा न भिद्यते॥२१०॥

(अन्यतो विलोक्य।) इह हि

निर्मुक्तवेत्रलतिकावलयेषु केचि-
दूर्ध्वप्रदेशविधृतेषु जनैः स्वकीयैः।
उत्प्लुत्य मर्कटवदुत्कटवेगमन्त-
र्विश्वा विलङ्घ्य निपतन्ति बहिर्न दीनाः॥ २११॥

अहो, वितस्तिमात्रस्योदरस्य परिपूरणाय किं किं न कुर्वन्ति जन्तवः। (अन्यत्र गत्वावलोक्य।) अत्रापि कापि विद्या प्रयुज्यमाना जनानां मनसि भयकौतुकरसावापूरयति। तथा हि।

उत्तुङ्गं वंशमुर्व्यामधिगतपरितोबद्धरज्जुं निखातं
निःशङ्कं निष्प्रयासं कपियुवतिरिव द्राक्समारुह्य काचित्।
अग्रे संतिष्ठमाना क्षणममरपुरंध्रीति संभाव्यमाना
चक्राकारभ्रमाद्याः प्रकटयति वधूरञ्जसानेकविद्याः॥ २१२॥

इयं हि विद्याप्रयोगोचितवेषपरिग्रहा न साधारणीं मुदमुपनयति। यतः।

अर्धालक्ष्यमनोहरोरुयुगली चण्डातकालम्बना-
द्वक्षः कङ्कटकेन सामिपिहितव्यक्तस्तनं बिभ्रती।
ग्रीवां मङ्गलतन्तुमात्रसुभगां वेणीकृतां च च्छटां
केशानां दधती विभाति वनिता व्यक्ताखिलाङ्गस्थितिः॥ २१३॥

अये, एतादृशी मे नामावलोक्य कश्चित्कंचित्प्रति किमपि ब्रवीति। (कर्णं दत्त्वा।) अयमेवं भणति—

'एतादृशं वपुरनेकविधप्रयोग-
निर्यत्नलाघवपरिष्कृतमुद्वहन्त्याः।
वात्स्यायनेन मुनिना कथितेषु केषु
स्याच्चातुरी न करणेषु विधातुमस्याः॥ २१४॥

किं च ।

इयमलप्स्यत यद्यनवद्यतामधिगता सकलावयवेष्वपि ।

कुसुमबाणरसार्णवमन्थनादमृतमुत्थितमारसयिष्यत ॥ २१९ ॥'

इति । अहो, अस्यामस्यानुरागः प्रकटितः । अनुचितश्चायम्, यदविज्ञातजातिर्देशान्तरीयतयानर्हसमागमेयम् । अथ वा कामुकानां मनःप्रवृत्तौ न जातिविशेषविचारः। (अन्यतो विलोक्य ।) अये, अत्र सर्वाङ्गसुन्दर्यः प्रारब्धयौवनाः काश्चन पुंश्चल्यस्तौर्यत्रिकं वर्तयन्ते । इदमेव दर्शनीयेषु वरीयः । यत्र शृङ्गारैकप्रधाने

प्रायः सर्वेन्द्रियप्रीतिः पश्यतां जायते नृणाम् ।

तरुणानां विशेषेण रसिकानां ततोऽपि च ॥ २१६ ॥

तदेतदेव कंचित्कालमालोकयामि । (इति तत्र गत्वावलोक्य ।) अहो, रमणीयमेतत् । यदेताः सरसनर्तनकलाविलासप्रचलितपादपङ्कजसंघटितकिङ्किणीकुलकिलिकिलितकोलाहलतिलतण्डुलितसघनमर्दलमृदुलनिःस्वनलहरीप्रवाहमन्तरान्तराजायमानैर्मधुरमधुरजनीरजनिकरभ्रमसमापतितनिरतिशयप्रेमभरविरचितदृढालिङ्गनतारकापटलसंभावनाविषयरदनावलीविलसितवदनान्तरालविगलितैरभिनवसहकारपल्लवसमास्वदनविरजीकृतगलतलकलकण्ठतरुणीकलकण्ठरवमदभरनिराकरणनिष्णातैर्गीतैः सुललितशृङ्गारहास्यकरुणादिनवरसप्रकटनचतुरतरनयनकमलबहुविधविलासकटाक्षविक्षेपणादिपरिदीपिताभिः सकलसुरासुरसंमथितसुधासागरसहसोदितकमलालयाकलेवरकान्तिभारपरिभवदाननिपुणाभिर्निजरूपसंपत्तिभिश्च दशवर्णसुवर्णविरचितशिरोमण्डननवरविमण्डलविराजितशिरस्पदविहायसविसृत्वरकबरीभरकालमेघप्रसाधनसाधनभूतबिसकण्ठिकाकुलविशङ्काकरनवमल्लिकादिविविधप्रसूननिकरपरिवान्तैः सकलजनहृदयानन्दसंदोहसंदायिभिः सुगन्धप्रवाहैश्च सभावासिनां श्रवणनयनघ्राणरूपाणीन्द्रियाणि तर्पयन्ति । किं च

सभामध्यस्थानां सहृदयजनानामभिसृताः

समारुह्योत्सङ्गं सरसकरपद्माङ्गुलिदलैः ।

स्पृशन्त्यो गात्राणि स्फुटविघटितश्मश्रुनिचया-
स्त्वचामप्याह्लादं विदधति सुधासेकजमिव ॥ २१७ ॥

(चिरं निर्वर्ण्य ।) अहो सुशिक्षितमासाम् ।

यत्पृष्ठतोऽनुचरदेशिकवक्त्रतालैः
प्रोत्साहिताश्चिरममूः कृतनृत्तलीला ।
खिद्यन्ति किंचिदपि नैव न च श्रमोत्थ-
निःश्वासवेगकृतदूषणलेशगीताः ॥ २१८ ॥

(अन्यतो विलोक्य ।) अत्र केनचिन्नटेन कमपि प्रबन्धमभिनेतुमारभ्यत इव । तथा हि ।

यथा हि श्रूयन्ते श्रवणसुभगंभावुकरवा
मृदङ्गा मृद्वङ्गीकरकलितकांस्यध्वनिभृतः ।
तथा पुञ्जीभावं दधति परितो नाट्यनिलयं
समासाद्यत्प्रोद्यत्कुतुकभरभुग्नाः सहृदयाः ॥ २१९ ॥

अत्र गत्वेदमपि किंचिदवलोकयामि । (इति तथा कृत्वा ।)

मध्ये दीपज्वलनमधुरे पार्श्वतः पाणिघत्री-
चित्रीभूते सरसहृदयैर्भूसुरैर्भासुराग्रे ।
पृष्ठे मार्दङ्गिकविलसिते रङ्गदेशे प्रविष्टः
स्पष्टाकूतं नटयति नटः कोऽपि कंचित्प्रबन्धम् ॥ २२० ॥

अये, अतिरसावहमेवैतत् । यतः ।

भावव्यञ्जनमन्यदेव ललितैरुत्पादितं नेत्रयोः
संज्ञायै विहितासु हस्ततलयोर्मुद्रासु चान्यो गुणः ।
वाणी प्राकृतसंस्कृतात्मकतया द्वेधाप्युदीर्णा पुन-
र्व्याख्याता च परैव षड्गुणवती सर्वं तदस्याद्भुतम् ॥ २२१ ॥

(कर्णं दत्त्वा ।) किमेष पठति ।

दुष्टं जपन्तं प्रति दारिकासुरं रुष्टस्य रुद्रस्य ललाटदृष्टिजा ।
रेजे तदीयानलधूमसंनिभा काली करालोज्ज्वलसौम्यविग्रहा ॥ २२२ ॥

(इति विमृश्य ।) आ, ज्ञातम् । अभिनीयमाने दारिकवधनाम्नि प्रबन्धे कश्चन श्लोकोऽयम् । (पार्श्वतो मुखानिलस्पर्शं नाटयित्वा तिर्यङ्मुखमवलोक्य ।) अये, काञ्चनसुन्दरीयं मुखानिलेन प्रतिबोधयन्ती मां किमपि विवक्षतीव । (तां प्रति ।) भद्रे, किं विवक्षसि । किं ब्रवीषि—'आर्य, नटेन पठितोऽयं श्लोकः संस्कृतमयः, तदर्थो न मया विज्ञायते। तद्भावेन भाषया व्याख्यायताम्' इति । भद्रे, शृणु । अनेन पठितस्यायमर्थः—

दुट्ठं जअन्तं पडि दारिआसुरं रुट्ठस्स रुद्दस्स ललाटदिट्ठिजा ।
रेए तदीआणलधूमसंणिहा काळी कराळोज्जळसोम्मविग्गहा ॥ २२३ ॥

इति । किं ब्रवीषि—'आर्य, साधु विज्ञातम्' इति । भद्रे, इतः परं नटेनैव विवरिष्यते । किं ब्रवीषि—'अविज्ञातप्रमेयस्वरूपस्य रसं न पुष्णाति विस्तरतः' इति । (सस्मितम् ।) भद्रे, अनुभवसिद्धं कथयसि । यदनारब्धसुरतक्रियाणां बालिकानां प्रथमतः करणविशेषप्रयोगो न वशीकरणाय भवतीति स्वयमेवानुबभूविथ । किं ब्रवीषि—'आर्य, एवमेतत्' इति । (पृष्ठतोऽङ्गुलिस्पर्शं नाटयन् । वलितग्रीवं विलोक्य ।) अये, अतिस्निग्धोऽयं चन्द्रकन्दलो मम रसिकाग्रेसरः पाणिना मामाकारयते । (तदभिमुखमुपसृत्य ।) किं ब्रवीषि—'अधुना विशिष्य दिदृक्षितो भवान् । दैवगत्या दृष्टिपथमवतारित इति समुच्छ्वसितं मे मनः' इति । सखे, आधुनिकः को विशेषः । किं ब्रवीषि—'शृणोतु भावः' इति । सखे, अवहितोऽस्मि । किं ब्रवीषि—'इमां कामप्यलंकारभूतामिव रङ्गपार्श्वे वितिष्ठमानां नटवधूटीं न पश्यसि । एषा तु

दिव्या वधूरिव जगज्जननीविलास-
यात्रोत्सवाय गगनस्थलतोऽवतीर्णा ।
नेत्राम्बुजन्मभिरनुक्षणमर्च्यमाना
सामाजिकैरुचितवेदिभिरुच्चकास्ति ॥ २२४ ॥

मया त्वत्र सद्यःसमागतमन्मथमहाचार्यविहितोपदेशमाद्रियमाणेन न केवलं नयनकमलाभ्यां किं तु हृदयकमलेनापि समर्च्यते' इति । सखे, नानुचितमेतत् ।

एषा विदोषा हृदयाम्बुजेन केषां न तेषा कवलीक्रियेत ।
योषा विभूषा रमणीयवेषा येषां मनीषा गुणदोषविज्ञा ॥ २२५ ॥

किं ब्रवीषि—'अपि च ।

लग्नं चेतो मम निजतनौ स्वर्णतालाभिघात-
व्याजादेषा द्रढयति मुहुः कुट्टनेनेव तक्षा ।
आक्रष्टुं तत्कथमिव मनः शक्यते कीदृशी च
द्वैधीभावे हृदयवपुषोः स्यादृशा देहभाजाम् ॥ २२६ ॥

तद्भवतात्र तत्संगमोपायो विचारणीयः' इति । सखे, किं दृष्टमात्रायामस्यामीदृशस्तेऽभिनिवेशः । किं ब्रवीषि—'अथ किम् । तथा ह्यस्याः

पूर्णेन्दुप्रतिमानमाननमिदं नेत्रे स्वतश्चञ्चले
गण्डौ दर्पणखण्डवत्सुविमलौ बिम्बप्रकाशोऽधरः ।
वक्षोजौ मणिहेमकुम्भरुचिरौ श्रोणी भृशं विस्तृता
पादौ पल्लवकोमलौ मृगदृशः सर्वं मनोमोहनम् ॥ २२७ ॥'

इति । (स्वगतम् ।) अहो, द्वित्रेषु दिनेषु मनोविनोदनसाधनमन्यन्नान्वेषणीयम् । (प्रकाशम् ।) सखे, तर्हि भवदभीष्टसाधनोपायस्तावदस्माभिरेव विचारयिष्यते । किं ब्रवीषि—'अनेन भवतो लृटः प्रयोगेण विमनीभूतोऽस्मि' इति । सखे, मा स्म विमनीभवः । शृणु लृटः प्रयोगे हेतुम् । इदानीं कर्तव्यशेषस्य सुहृत्कार्यस्य गौरवेण त्वरावन्तो वयम् । अनुचितं चारभ्य मध्ये विरमणम् । किं ब्रवीषि—'कदा पुनः सुहृत्कार्यशेषस्याशेषता भवति' इति । सखे, प्रदोष एव भविष्यति । किं ब्रवीषि—'नन्वासीदति प्रदोषः । किं विलम्बसे' इति । सखे, अविलम्बितमेव गच्छामि । (इति परिक्रामन् ।) किं ब्रवीषि—'निशायां पुनर्दर्शनं भवतु । मदर्थमपि भावेन सादरं यतितव्यम्' इति । (वलितग्रीवम् ।) कः संदेहः । (इति परिक्रम्य प्रतीचीं विलोक्य ।) अये, आसन्न एव संध्यासमयः । तथा हि ।

---

१. 'किं ब्रवीषि—' इति लेखस्य 'एषा—' इत्यतः प्राग्लेखनयोग्यस्यादर्शद्वयेऽप्यत्र प्रक्षेपो भ्रान्तिमूलकः, 'अपि च' इत्युक्त्यनुरोधात्.

संचारं सकलासु दिक्षु सविता कृत्वा परिश्रान्तव-
द्विश्रामाय समाश्रयन्निजकरस्पर्शेन रक्तामिमाम् ।
काष्ठामोष्ठविनिःसृतैरिव तया ताम्बूलपूगद्रवै-
रालिप्तः कृतचुम्बयारुणतनुः पित्सत्यपामाशये ॥ २२८ ॥

अपि च ।

प्रक्षालनाय वपुषः पतितुं पयोधौ
प्रत्यग्धराधरशिरस्पदमारुरुक्षुः ।
आलम्बनार्थमिव पादपमौलिदेशे-
ष्वात्मीयमर्पयति चण्डकरः करौघम् ॥ २२९ ॥

तदिदानीं चन्दनमालाया मन्दिरं प्रत्यविलम्बितमेव गन्तव्यम् । (इति परिक्रम्य ।) अये, कोऽयं दण्डपाणिरग्रतो दुःशकुनीभवति । (विभाव्य ।) आ, ज्ञातम् ।

दुर्गन्धं दशनेषु मूर्तमिव यो धत्ते चिरात्संचितं
कृष्णश्वेतमलं मलं मलिनता पात्रं च वस्त्रं कटौ ।
जातस्वेदपरागधूसरतनुर्दूरीकृतो यौवृतैः
कामभ्रान्त इतीरितो द्विजसुतः सोऽयं समागच्छति ॥ २३० ॥

एष हि

संभाषणैरमितसीत्कृतहासगर्भै-
रम्बूकृतैः स्वपरवर्णनदूषणाढ्यैः ।
दुःखाकरोति पुरुषं मुहुरग्रदृष्ट-
मावर्तितैरधिकनीरसभावयुक्तैः ॥ २३१ ॥

अपि च ।

क्रुद्धः प्रहरति सर्वान्पितरं वा मातरं पितृव्यं वा ।
संप्रति कं प्रति रुष्टो न हि जाने दण्डभृत्प्रहर्तुमयम् ॥ २३२ ॥

तदेनं दुःसहासन्नस्थितिमसंभाष्यैव गमनं सांप्रतं सांप्रतं मम । (इति तदुपायान्वेषी पार्श्वतो विलोक्य ।) इमामश्वत्थवेदिकामन्तराकृत्वा वामनीभूतस्तिष्ठामि । (इति तथा कृत्वा ।) अये, गतोऽयं दुःशकुनीभूतो द्विजसुतः । अमुष्य दर्शनाज्जनि-

ष्यमाणमशुभमपाकर्तुं मनागिह स्थित्वा पुनर्गमनमाचरितव्यम् । इत्यश्वत्थवेदिकायां क्षणमासित्वा सहसैव प्रस्थितः । अये, पुण्यदर्शना काचन बालतरुणी मनःशल्यमपाकर्तुमिव नियत्या मम दृष्टिपथे प्रेर्यते । (सहर्षं विलोक्य ।) एषा हि

धवलकुसुमधारिणी मृदुलहसितकारिणी
विशदविमलहारिणी विविधललितहारिणी ।
तरुणहृदयहारिणी मदनजलधितारिणी-
विपुलजघनभारिणी द्विरदमधुरचारिणी ॥ २३३ ॥

मम सुशकुनीभूयाभिगच्छति । किं च ।

सुवर्णकुम्भावमृतेन संभृतौ प्रकाशयन्ती पुरतः पयोधरौ ।
सितांशुकान्ताननकान्तिरङ्गना सितांशुका नेत्रमुदं प्रसूयते ॥ २३४ ॥

अये, संनिहितेयम् । भद्रे, कस्यचित्कार्यस्य गौरवेण गच्छामः । तदिदानीमसंभावनापराधः क्षन्तव्यः । किं ब्रवीषि—'आर्य, भवतु । अविलम्बितमेव मन्नयनचकोरिकायास्त्वदाननचन्द्रचन्द्रिकास्वादः' इति । भद्रे, तथैव । (इति परिक्रम्य ।) अये, प्राप्तमेव चन्दनमालामन्दिरम् । यावदन्तः प्रविशामि । (इति प्रवेशं नाटयित्वा ।) अये, सद्यःकृतचिरकालपदवीसंचारजनितपरिश्रान्तिशान्तिकर्मणे बहिरलिन्दवेदिकायामरविन्दमुखीकरमन्दविधूततालवृन्तपरिवान्तवालगन्धवाहसंततिमासेवमानः समोदमासीनः प्रियसुहृन्मन्दारकोऽयममन्दादरेण मामवलोक्य सरभसमभ्युत्तिष्ठति । (सत्वरमुपसर्पन् ।) भो भोः प्रियसखे, मा मैवमाचरितव्यम् । यदात्मानं प्रत्यात्मनोऽभ्युत्थानमनुचितम् । यच्च विशिष्याधुना परिश्रान्तोऽसि । किं ब्रवीषि—'सखे, उभयमपि युक्तरूपमेव कारणमनभ्युत्थानस्य । किं च ।

अभिन्नावेवावां मनसि करणेष्वप्यविरता-
दतिस्नेहात्सत्यं न च खलु कदाप्यात्मनि भिदा ।
परिष्वङ्गं वाञ्छन्सपदि वपुषोरैक्यजनकं
करोम्यभ्युत्थानं चिरधृतवियोगव्यथितयोः ॥ २३५ ॥'

इति। सखे, सम्यगाचरितम्। ममापि चेतस्त्वदाश्लेषसुखाय त्वरते। (आश्लेषं नाटयन्।)

दूरीकर्तुं दिनकरकरा दुःखरूपं तमिस्रं
सर्वाङ्गानाममृतलहरी कर्तुमाह्लादकृत्यम्।
कर्तुं तावत्कतकरजसां कीर्तिरन्तः प्रसादं
गाढाश्लेषः परमसुहृदां कोऽपि सर्वातिरिक्तः॥ २३६॥

किं ब्रवीषि—'सखे, इतस्तावदर्धासनमलंक्रियताम्' इति। (सहर्षम्। आसीनः।) सखे, किमनवसरे प्रियामुखारविन्दपरिम्लानिकारकस्य प्रवासशिशिरस्यावसितिरूपो वसन्तोदयः संवृत्तः। किं ब्रवीषि—'अथ किम्' इति। न खलु भागधेयशालिनां विलम्बिनी कार्यसिद्धिः। किं ब्रवीषि—'सर्वत्र परमेश्वर्याः कटाक्षकणिकावैभवमेव कारणम्' इति। सखे, त्वया समर्पितः कार्यभारो यथाभिहितमेव सम्यगवतारितः। किं ब्रवीषि—'कोऽन्यो भवानिव परेषामुपकारकारी। किं पुनः प्रियसुहृदो मम' इति। सखे, पाक्षिकत्वेन समर्पितं कार्यभारं तु धारयाम्येव। स पुनरिदानीं त्वय्येव प्रत्यर्प्यते। किं ब्रवीषि—'यदभिलषितं सख्युः' इति। (पार्श्वस्थितां चन्दनमालां प्रति।) प्रियसखि, इतः परं प्रियतम एव ते धुरं वक्ष्यति। किं ब्रवीषि—'एतावन्तं समयमवाक्षीदपि' इति। (सस्मितम्।) सखे मन्दारक, इयं प्रियसखी मामपि भवत्तो निर्विशेषं पश्यति। किं ब्रवीषि—'उचितवेदिनीं प्रियतमेयं नापराध्यति यदावयोरभेदः परस्परस्नेहातिरेकेण प्रागेव संजातः' इति। सखे मन्दारक, स्वनुष्ठितो भव। निशायां विश्वमातुरुत्सवावसरे प्रियतमया सह कंचित्प्रदेशमलंकुर्वाणं भवन्तमवलोकयितुमागमिष्यामः। किं ब्रवीषि—'यदभिलषितं सख्युः' इति। (चन्दनमालां प्रति।)

नेत्रानन्दं निखिलजगतामावहन्तीं वहन्तीं
गात्राभिख्यामखिलतरुणीगर्वनिर्वाणहेतुम्।
पश्यामि त्वां प्रियसखि पुरा पार्श्वसंस्थां प्रियस्य
प्राप्तामिन्दोर्भुवमिव कलामुत्सवे लोकमातुः॥ २३७॥

तदिदानीं गन्तुमनुजानीहि । किं ब्रवीषि—

'हृदयमनिशसक्तं त्वय्युरुस्नेहवत्त्वा-
द्गमनमनुविधत्ते यद्यपि प्रातिकूल्यम् ।
तदपि समयभेदं प्रेक्षमाणा कथंचि-
द्यदभिलषितमार्यस्येति वाणीं ब्रवीमि ॥ २३८ ॥'

इति। (मन्दारकं प्रति ।) सखे, किं ते भूयः प्रियमुपकरोमि । किं ब्रवीषि—

'दूरस्थितोऽपि निकटस्थितवत्प्रियायाः
संरक्षणं प्रतिभुवा भवता विशङ्कम् ।
यत्साधितोऽसि तदिदं परमं प्रियं मे
यस्मात्परं किमपि न प्रतिपत्तुमस्ति ॥ २३९ ॥

तथापीदमस्तु—भरतवाक्यम् ।

श्रीकोटिलिङ्गनिलये सततं लसन्ती
श्रीकण्ठदेवदुहिता परिपातु लोकान् ।
क्षोणीतले च तुलितामृतसारवेणी-
वाणी विराजतं चिराय महाकवीनाम् ॥ २४० ॥

(इति निष्क्रान्तः ।)

समाप्तश्चायं भाणः ।

---

ग्रन्थकर्तुः प्रशस्तिः ।

योगे योऽगेन्द्रजाया रतमनवरतं नित्यमुक्तोऽपि धत्ते
यो गेयो गेहकान्तादिकविषयपरित्यागिभिर्योगिभिश्च ।
योगे योगेन्द्रभावं विपदपनयने तत्पदोर्याति तासां
योगे योगे जनोऽयं व्रजति विधुरतां हन्त मायाविमूढः ॥१॥
आदेशस्यास्तिधातोः[1] पतयति पुरुषे क्वापि केऽपि श्रयन्ता-
मादेशस्यास्ति धातुर्व्यतिचलनमिति भ्रान्तिमन्तो नभन्ताम् ।
गोत्रापत्याधिकारोत्तरकलितविधानानुवादादिभूते
गोत्रापत्याधिकारोचितवपुषि वयं त्वश्रमेण श्रयामः ॥ २ ॥
धत्ते वामाङ्गवक्षोरसनमवमतानिःस्वकान्ताः स्वकान्ता
यासां नित्यार्चितानां विततिभिरभितो भासुराणां सुराणाम् ।
नो यासां वेत्ति विद्वानपि नयनपदे धार्यमाणार्यमाणां
माहात्म्यं मूर्तयस्ता मम कलितकृपासारमन्तारमन्ताम् ॥ ३ ॥
घ्नन्देवक्षेमहं तारकदितिजमहंतामहं तामहन्ता
पातालस्वः कुमारः सरसिजसुकुमारः कुमारः कुमारः ।
यस्याभूत्कामहा सोऽवतु जितसुमहासो महासोमहासो
वाञ्छन्ती यं सतीशं नृततिरिह सती शंसतीशं सतीशम् ॥४॥
यदि सकृदकरिष्यस्त्वत्पदं मस्तके मे
भगवति कथमेषा निःस्वता मेऽभविष्यत् ।
निहितमुपनतानां मूर्ध्नि यद्धाति नृणा-
मुपरि किदिव[2] नाम्नां प्रत्ययस्तद्धिताख्यः ॥ ५ ॥
पिनाकिजायामपि नाकिजायापरीतदास्या विपरीतदास्याम् ।
मनः सदा व्यारम नः सदाव्या मदभ्रमायां नमदभ्रमायाम् ॥ ६ ॥

१. अस्तिधातोरादेशभूतभूपदार्थस्य पतिरिवाचरति क्वापि पुरुषे केऽपि श्रयन्ताम्. धातुराज्ञाया व्यतिचलनमस्तीति भ्रान्तिमन्तो मा भूवन्. वयं तु 'शिवादिभ्योऽण्' इति सूत्रोपात्ते शिवे पर्वतापत्याधिकारोचितवपुषि अश्रमेण श्रयामः. २. तद्धितसंज्ञः कित्प्रत्यय इव वृद्धिनिमित्तम्.

शयान कान्ते भृशयानकान्तेरधीश मायाः परधीशमायाः ।
भवान्तरे नोऽपि भवान्तरेनो हरं जितारे विहरञ्जितारे ॥ ७ ॥

विनायकसुतं वन्दे विनायकशरासनम् ।
विनायकसधर्माणं विनायकरथप्रियम् ॥ ८ ॥

भूताधिराजतनुभूताधिरुह्य निजवेतालिकागलतले
यातादरा सपदि जातादरा समिति भूतादिभिः परिवृता ।
प्रेताधिनाथपुरनीतामरारिरभिभूताखिलाकृतिधरा
प्रीता शिवा भरितवाताशना दुरितभीताय मे दिशतु शम् ॥९॥

कोटिलिङ्गपुरे वासी युवराजो महाकविः ।
अरीरचदिमं भाणं रोचतां सुतरां सताम् ॥ १० ॥

कोटिलिङ्गपुरे वासा भवभालाक्षिसंभवा ।
काली करोतु लोकानां सततं सकलं शिवम् ॥ ११ ॥

शास्त्रेषु शाततमशास्त्रसमापि बुद्धिः
काव्येषु नव्यनलिनाधिकसौकुमारी ।
यस्यास्यतामरसलास्यरसा च वाणी
हर्षं न कस्य कुरुते युवराज एषः ॥ १२ ॥

अपि पुरुकृतरीढं पण्डितंमन्यमूढै-
र्मम तु सुकृतिरत्नं हन्त गृह्णन्ति सन्तः ।
अवगणितमवद्यैर्दर्दुरैरप्ययाप्याः
किमनणकमृणालं राजहंसास्त्यजन्ति ॥ १३ ॥

व्याकृत्यादिसमस्तशास्त्रसमुदायाम्भोधिकुम्भीसुतः
काव्यालंकृतिनाटकोद्धसुकृतौ काव्यस्य सत्यं समः ।
पुण्यः पण्डितराजराजिगजताकुम्भाद्रिसंभेदने
दम्भोलिर्युवराजकोविदमणिर्वर्वर्ति सर्वोपरि ॥ १४ ॥